विश्वसंस्कृतम् - होशिआरपुर - प्रकाशनम्



अनुमुद्रितोऽशः

# शिक्षणम्

संगीतमयं नाटकम्

प्रणेता - वि० के० छत्रे

माननीय डॉ. सत्यव्रतशास्त्रि-
-महोदयेभ्यः उपायनीकृतम्
विद्वद्वराय तद्भार्यायै च

[illegible]शास्त्री
८ मार्च १९८९

# शिक्षणम्†

विश्वनाथकेशव छत्रे*

**नाट्यकथा-संक्षेप:—**

मुंबापुरीस्थ: मध्यमवर्गीय: धनागम-कर-पर्यवेक्षक: (Income-tax-Inspector) दिवाकर: तस्य पत्नी च नलिनी शालान्तवर्गे अधीयानां कन्यां सुधां प्रोत्साहयत: नृत्यगानशिक्षणे। सापि तारका इव प्रकाशितुम् ईहमाना नचिरात् प्रावीण्यं संपादयति। यथा-कालं महाविद्यालये प्रविष्टा सा तत्रापि पित्रो: समोदानुमत्या प्रणय-प्रधाननाटके संशय-कल्लोले नायिकाया: भूमिकाम् उत्तमरीत्या अभिनीय प्रेक्षकाणां प्रशस्त्या सह पारितोषिकं संपादयति। पितरौ मुदितौ वत्साम् अभिनन्दयत:। परं नचिरात् तयो: पूर्वसंमतिम् असंपाद्य नाटकस्थ-नायके सा आकृष्टा तं परिणीय निवेशनद्वारा (Registration) आदौ पत्रद्वारा सूचयित्वा गृहम् आगच्छति, पित्रो: क्षमां याचितुम् आशिषश्च संपादयितुं पत्या सह, परं पितरौ स्वापमान-कुपितौ नोत्सहेते क्षन्तुम्। किंतु जामातु: जन्म-रहस्यं तस्य मुखेन अभिज्ञाय स: कुलशीलवान् स्वजातीय: द्विज: इति प्रतीतप्रायौ तौ शांतकोपौ अगतिकत्वेन आशिष: वितरत: कन्याजामातृभ्याम्।

---

*जोगकेकर-वाडा सिद्धेश्वर-आली पो०-कल्यान, जि० ठाणे महाराष्ट्र।

† नाटक-रचना-प्रयोजनम्—

"मानुष्यं च सुजीविका, भगवति श्रद्धा, स्वकार्ये रति: सत्यप्रेम च देशधर्मविषये भक्तिश्च सेवारुचि:। नम्रत्वं प्रबलस्पृहोन्नतिकृते धैर्यं च तेजस्तथेत्यादीनां समवाप्तये खलु नरस्यावश्यकं शिक्षणम्" अस्मिन् श्लोके कविना शिक्षणस्य प्रमुखा: उद्देशा ग्रथिता:। परम् इदानीं भारते स्वातंत्र्य-सूर्योदयात् पंचविंशतिवर्षेषु अतीतेषु ते उद्देशा: प्रचलितशिक्षणपद्धत्या कियदवधि सफलतां गता: तद् वृत्तपत्रेषु प्रत्यहं प्रकाश्यमानानि शिक्षक-विद्यार्थि-संबंधीनि वृत्तानि प्रकटीकुर्वन्ति। विविधरीतिभि: प्रगतये प्रयतमानमपि शासनं शिक्षणक्षेत्रे स्वास्थ्यं संरक्षितुं, चारित्र्य-सामर्थ्य-तेज:-सेवारुचीत्यादि-संपन्नान् युवति-युवकान् विधातुम् अयशस्वि प्रायश: प्रतीयते। तस्य कारण-मीमांसा अत्र अप्रस्तुता। महाराष्ट्रराज्ये शिक्षणक्षेत्रे कीदृशी स्थिति:, समाजे तस्या: कीदृशश्च परिणाम: इत्यपि अस्मिन् प्रदर्शयितुं नाटककारेण प्रयतितम्।

—उपसम्पादक:

नाटककथायाः ओघे शिक्षणविषये संलग्नाः नैकविषयाः प्रसंगानुसारं चर्चिताः। विद्यार्थिनाम् औद्धत्यं, सव्यंगशिक्षकाणां तैः क्रियमाणः उपहासः, शिक्षकाणाम् अपर्याप्तम् अध्याप्यमानविषये प्रावीण्यम् अनीतिमत्ता स्वकर्तव्ये अनुत्साहः इत्यादिदोषाः, आदर्शशिक्षकाणां च संस्थाधिकारिभिः स्वार्थहेतुना विधीयमानः उत्साहभंगः, पालक-शासनाभ्यां क्रियमाणा विद्यार्थि-शारीर-बल-संवर्धने उपेक्षा इति प्रमुखाः विषयाः।

महानगर्यां धनार्जनं कुर्वद्भ्यां पितृभ्यां वात्सल्यात् वंचिताः बालाः, असंस्कृतस्त्रीभिः संवर्धिताः दुर्विनीताः भवन्ति। युवतियुवकाः हानिकरीम् अपि लोकरीतिम् (उदा० धनपुटिकाम्—Purse हस्ते वा करंडके वा लुंठाक-सुलभ-स्थितौ रक्षणस्व) त्यक्तुं न धृष्णुवन्ति ततश्च वृथा धन-नाशं सहन्ते। उपनयनसंकारस्य आडम्बरमात्रम् अवशिष्टम् इदानीम्। परं गुरु-कृपया लब्ध-तपस्तेजाः अशास्त्रीयं कर्म कर्तुं निषिध्यन् उपाध्यायोऽपि क्वचित् यजमानं प्रेरयति शास्त्रोक्तकर्मणि।

यौवनभरसंपन्नानां युवकानां कृते प्रेयसीसंपादनस्य विविधाः मार्गाः अत्र निर्दिष्टाः। प्रणय-प्रधान-चित्रपटादपि कथं हितबोधः प्राह्यः भवति तद् विशदीकृतम्। प्रेयसीं लब्धुकामेन यूना दीपमहोत्सवे वा यात्रायां मार्गभ्रष्टां स्वजनवियुक्तां च स्त्रियं पृष्ट्वा, संयमपूर्वकं तस्यां विश्रम्भम् उत्पाद्य सा स्वजनेन योक्तव्या वा गृहं प्रापयितव्या वा इति कठिनकर्तव्यमपि आदिष्टम्।

अन्ते राष्ट्रस्य शक्तिः—युवतियुवकाः, पालकैः शासनेन च दाक्ष्येण संवर्धयितव्याः ते विद्याशीलद्युतिबलयुताश्च प्रयत्नैः कर्तव्याः, पालकशासकौ च तदर्थं भगवान् शीघ्रं प्रेरयतु इति प्रार्थ्य नाटकं समापितम्।

## अंकः १, प्रवेशः १

### नांदी ( रागः—दुर्गा )

वंदनमयि ! मातः ! शारदे ! ॥ ध्रु० ॥
जगज्जननि ! वत्सले ! स्वबालान् पाहि पाहि नित्यम् ॥ १ ॥
दुर्निवार इह विषयविमोहो नयति जनं स कुपथम् ॥ २ ॥
निवार्याशु तं प्रेरय शिवकर-मार्गे अंब ! धियम् ॥ ३ ॥

स्थलम्—मुंबापुरीस्थनिवासः; समयः—प्रातः

[ गृहिणी-नलिनी चाय-संपादन-कार्ये मग्ना पंचवर्षदेशीयम् आनंद-नाम-पुत्रकं शय्यायां निद्रितं विलोक्य शब्दापयति ]

नलिनी—वत्स ! आनंद ! उत्तिष्ठ उत्तिष्ठ शीघ्रम्। पश्य, सूर्यस्य कराः अपि प्रविष्टाः गवाक्षात्।

आनंदः—(उत्थाय शनैः-शनैः अक्षिणी निपीडयन् आगत्य, मातुः पुरतः उपविश्य च) देहि मे चायम् :

नलिनी—रे ! कुरु आदौ मुखप्रक्षालनं दन्तधावनं च।

आनंदः—पश्चात् करिष्यामि। देहि मे चायम्।

नलिनी—किं भ्रष्टबुद्धिः त्वम् अद्य संवृत्तः। गच्छ स्नानगृहम् आदौ मुखशुद्धयर्थम्।

आनंदः—अतीव क्षुधाकुलोऽस्मि। नोत्सहे मुखं प्रक्षालयितुम्।

नलिनी—नैव दास्यामि चायं विना मुखप्रक्षालनम्।

आनंदः—कथं नु ताताय शय्यायामेव ददासि अवसरे अक्षालितमुखाय।

नलिनी—गुरुजनानां दुर्वृत्तं नानुकरणीयं बालैः गच्छ सत्वरम्।

आनंदः—निर्दया खलु त्वम्। (इत्युक्त्वा स्नानगृहं गत्वा कथमपि मुखं प्रक्षाल्य आगत्य उपविशति मातुरग्रे) देहि इदानीम्।

नलिनी—रे ! पश्य तावत् दर्पणे स्वमुखम्। अस्वच्छस्त्वम्। दुराग्रहस्त्वम्। एहि। करोमि ते मुखप्रक्षालनम् शिशोः इव।

[ स्नानगृहं नीत्वा मार्जयति तस्य मुखं यथोचितम् ]

आनंदः—देहि चायम्।

नलिनी—हन्त ! किं विस्मृता अद्य ईशप्रार्थना ? पठ 'वक्रतुंड ... ...'। प्रणम देवं देवागारस्थितम्।

आनंदः—त्वं क्लेशदायिनी नूनम्। (तुण्डं वक्रं कृत्वा 'वक्रतुंड महाकाय' इति पठति) देहि चायम्। देहि बिस्कुटानि।

( बिस्कुटैः सह चायपानम् आनंदः करोति )

नलिनी—जात ! अद्य उपाध्यायः देवपूजार्थं न आयास्यति। अतः सत्वरं स्नात्वा देवपूजां संपादय।

आनंदः—अम्ब ! मया क्रीडार्थं कदा नु गन्तव्यम् ।

नलिनी - न इदानीम् । पूजोत्तरम् अध्यापनवर्गं गंतव्यमिति विस्मृतं किम् । त्वरस्व अतः ।

आनंदः—क्रीडित्वा स्नास्यामि । (वहिर्गन्तुं प्रवृत्तः) ।

नलिनी—(प्ररुध्य तम्) मा मा गच्छ क्रीडार्थम् ।

[ आनंदः मातृहस्ते यष्टिं दृष्ट्वा पलायमानः अनुधाव्यते जनन्या । अत्रान्तरे मातुलः पंडितनामा द्वारे रुणद्धि आनंदम् ]

नलिनी—भ्रातः ! पश्यामुं ते भागिनेयं, यः दशति मातरम् ।

पंडितः—(स्मयन्) किं मे दर्शनेन, उपदेशेन वा ।

आनंदः—मातुल ! दिष्ट्या आगतोऽसि । त्वमद्य देवपूजां करिष्यसि ननु ।

पंडितः—(स्मयन्) अवश्यम् । त्वं क्रीडातुरः दृश्यसे । गच्छ ।

आनंदः—(मुदितः) कियान् प्रियंकरः मे मातुलः ।

[ निष्क्रान्तः ]

नलिनी—का वार्ता ? को नु उपक्रमः ?

पंडितः—अस्त्येव, कथयामि । कुत्र गताः दिवाकरपन्ताः ? कथं तेषां प्रकृति-स्वास्थ्यम् ?

नलिनी—गताः वसईं प्रति । नित्यप्रवासिनां कुतः प्रकृतिस्वास्थ्यम् ?

पंडितः—सुचिरम् ईप्सितं कार्यालये उच्चतरपदं लब्ध्वापि न परितोषः ?

नलिनी—कुतः परितोषः ? लभ्यमानम् अधिक-वित्तं भिषग्देयार्थं व्ययीक्रियते । तदर्थं च उत्तमर्णः शरणं गंतव्यः न भवति इति स्वल्पं सांत्वनम् ।

गंगुः—(प्रविश्य) मातृभगिनि ! सूचिं मे ददासि किम् ? (पंडितं दृष्ट्वा स्वगतम्) अयि । मातुलः आगतः ।

नलिनी—पश्य तत्र सीवनपेटिकायाम् ।

गंगुः—(दृष्ट्वा) भगिनि, न दृश्यते तत्र ।

नलिनी—अस्माकं गृहे स्थाने वस्तुलाभस्तु कठिनः ।

गंगुः—शान्ताभगिनीगृहे अवश्यं लभ्येत । तत्र गच्छामि (निष्क्रांता) ।

पंडितः—अथ सुधा न दृश्यते । क्व गता सा ? ३८

नलिनी—ह्यः सत्यनारायणपूजा निर्वर्तिता देवरगृहे। तत्र साग्रहं सा वासिता नृत्य-गायनार्थम्। इदानीं नचिरात् प्रत्यागमिष्यति सा।

[ सुधा प्लास्टिककरडकहस्ता प्रविशति काष्ठासने च उपविशति ]

पंडितः—अयि! स्मर्यमाणा एव आगता त्वं नूनं शतायुर्जीविष्यसि। वत्से! त्वया ह्यः निर्वर्तितः गाननृत्यसमारोहः कथम् अभिहितः रसिकैः।

सुधा०—शोभनः। (सद्यः उत्थाय करंडकस्थानि वस्तूनि इतस्ततः कृत्वा धनभस्त्रिकां (purse) नाप्नुवंती संचिता भवति) हन्त! मम धनभस्त्रिका लुंठिता इति दृश्यते।

नलिनी—वत्से, पश्य सम्यक् सर्वाणि वस्तूनि करंडकात् एकैकशः निष्कास्य।

सुधा—(तथा कृत्वा) (सविषादम् साश्रु) अम्ब। न दृश्यते।

पंडितः—कुत्र त्वया निहिता आसीत्?

सुधा—अस्मिन्नेव करंडके मम कौशेयवासोमध्ये।

पंडितः—करंडकस्तु पारदर्शकः। केनापि लुंठाकेन प्रवासिजनसम्मर्दे हस्तगता कृता सा प्रायेण।

सुधा—आम्! तैलरथारोहणे, महान् संभ्रमः अभूत्—रथनायकप्रवासिनोः विवादेन समुद्भूतः।

पंडितः—ईदृशः समयः तु सर्वथा अनुकूलः पुटकलुंठाकानाम्।

नलिनी—स्वहस्ते किमर्थं न रक्षिता भस्त्रिका?

शान्ता—(प्रविश्य) मातुलशब्दश्रवणेन आगतास्मि कांश्चित् ज्ञानकणान् विचेतुम्।

पंडितः—समये एव भवत्याः आगमनम्। शुद्धभावेन पृच्छामि। उत्तरं दीयताम्।

शान्ता—पृच्छतु भवान्।

पंडितः—पुरा स्त्रियः स्तकंचुके पुटकद्वयं रक्षन्ति स्म धनभस्त्रिकारक्षणार्थम्। किमर्थम् इदानीमपि तथा न क्रियते भगिनीभिः?

नलिनी—न किमपि कारणं तत्र। केवलः नवाचारः (फैशन)।

शांता—कुतः अस्य प्रश्नस्य इदानीम् उद्गमः?

पंडितः—सुधायाः धनभस्त्रिका नष्टा अस्मात् करंडकात्।

शान्ता—इदं तु नित्यपरिचितं वृत्तम्। नचिरात् मम कापि सखी मातृगृहं निवर्तमाना, मासिकवेतनपूर्णां भस्त्रिकाम् ईदृशे करंडके निधाय निश्चिन्तमनसा विद्युद्रथेन प्रवसंती शोकं प्रापिता केनापि लुंठाकेन।

पंडितः—अतोऽहं ब्रवीमि—कष्टार्जितं धनमहो! परिरक्षितव्यम्। यत्नैः सदैव सकलैर्बहु सावधानम् इत्यस्ति मानवमनः-सहज-प्रवृत्तिः। किं मानवः स खलु यः स्वहितेऽप्यदक्षः स्वस्य धनं वा बहुमूल्यं वस्तु दक्षतया रक्षितव्यम् इत्यपि शालायाम् अध्यापयितव्यं किम्। धिक् तत् शिक्षणं, यत् छात्रमनः अत्यवश्ये हितकर्तव्येऽपि न प्रेरयति।

नलिनी—भ्रातः! किमत्र शिक्षणं करिष्यति? अनुल्लंघ्यो नवाचारः।

सुधा—अन्यच्च, महाजनो येन गतः स पन्थाः।

पंडितः—वाचि वीरत्वं सम्यक् प्रतीयते कन्याजनन्योः। परम् इदं वीरत्वं हानिकररूढिविच्छेदने यदि प्रतीयेत तर्हि अन्वर्थकत्वम् इयात्। वत्से! किमर्थं त्वमेव महाजनः न भवसि?

शान्ता—'अहम् उपहास्यतां गच्छेयं सखीजनानाम्' इति बिभेति सा।

नलिनी—आम्। अयमेव प्रत्यूहः।

पंडितः—परं सर्वोऽपि महाजनः प्रारंभे उपहास्यतां गतः लोकानामिति न विस्मर्तव्यम्। उदाहरणार्थम् गोपालरावः आगरकरः, कर्वेमहर्षिश्च स्त्रीशिक्षणम्, विधवाविवाहेत्यादिषु समाजसुधारादिविषयेषु प्रयतमानौ।

नलिनी—न तादृग् धैर्यम् अस्मादृशानां सामान्यानाम्।

पंडितः—किमर्थम् असामान्यत्वसंपादने उत्कटेच्छा न धारयितव्या? प्रत्येकेन नरेण नारायणत्वम् अवाप्तुं प्रयतितव्यम् इति तु पितामहस्य विश्वसृजः उत्कटेच्छा।

नलिनी—भ्रातः! तव प्रवचनं प्रारब्धमिव आभाति।

पंडितः—आम्! हृदयस्थम् अन्यच्च शल्यम् आविष्करोमि। युष्माभिः नारिभिः यद् छत्रं धार्यते तत् सर्वथा अनुपयुक्तम्। अक्षमं हि तत् युष्मद्देहं रक्षितुं धारासारवृष्टिकरात् पर्जन्यात्।



धा—किं कृषकेन इव षोडशशलाकाछत्रं मया धारयितव्यम् इति सूच्यते।

पंडितः—आम् ! पश्यामि तावद् युष्मासु तिसृषु का, उपयुक्ततायां लब्धप्रत्यया तादृक् छत्रधारणे स्वधैर्यं प्रकटीकरिष्यति इति ।

शान्ता—विचारयामि ! प्रतीतं मे यद् अद्यतनम् अस्मच्छत्रं सर्वथा अक्षमं वृष्टौ रक्षितुम् एकाकिनीम् अपि स्त्रियम् किमुत अर्भकसहिताम् ।

पंडितः—सत्यं ब्रवीमि ! कंचुक-पुटके घनभस्त्रिकां वृहच्छत्रं च धारयितुं प्रवर्तमानायै धीरायै महिलायै किमपि पारितोषिकं दास्यामि प्रकट-गौरवपूर्वकम् ।

आनंदः—(प्रविश्य, देवागारे दृष्टिं निक्षिप्य च) मातुल ! किं त्वया अद्यापि देवपूजा न अनुष्ठिता ।

पंडितः—अलं चिंतया । 'करिष्यामि' इति पूर्वमेव प्रतिश्रुतं मया । भगिनि !! पूजासाहित्यं सिध्यताम् ।

नलिनी—विचारयामि, भ्रातः भवता उद्घोषितां पारितोषिकयोजनाम् ।

पंडितः—सद्विचारः विचाराधीनतां गतः इति प्रशस्यम् । विचारोत्तरम् आचारः ।

शान्ता—आम् ! अहमपि विचारयामि । साधयामि ।

नलिनी—एहि वत्से ! स्वस्वकार्यम् अनुतिष्ठाव ।

( निष्क्रांते )

× × ×

अंकः १ प्रवेशः २

[साप्ताहिकाहारविहारमंडलसंमेलम् रात्रौ दशवादनसमयः । सुखासीनाः विविधव्यवसायिनः दृश्यन्ते]

आवारावः—भिषग्वर ! किम् नु विशेषं वृत्तम् ।

भिषग्वरः—केनापि कविना 'चतुराकृतिः, इति उपाधिदानेन वयं भिषग्वराः उपवर्णिताः इति कस्मिन्नपि मासिकपत्रे मम दृष्टिपथम् आगतम् । चतुरः खल्वसौ कविराजः ।

प्रधानः—'मुद्राराक्षसः' तत्र आशंक्यते मया । 'चतुरकृतिः' इति खलु सार्थोपाधिः भिषग्वरस्य, शय्याबद्धस्य मरणोन्मुखस्य वा रुग्णस्य उज्जीवनेन ।

भिषग्वरः—प्रधान महाशय ! 'चतुराकृतिः' इत्यपि सार्थोपाधिः ।

आबारावः—विशदीक्रियतां तर्हि तस्य अन्वर्थकत्वम् ।

भिषग्वरः—श्रूयताम् ।

अबारावः—अवहितोऽस्मि । वयस्याः, श्रूयतां सर्वं तावत् भिषग्वरोदितम् ।

भिषग्वरः— देवश्च देवदूतश्च मानवो राक्षसस्तथा ।
चतुराकृतिरीदृक्षो भिषग् रुग्णेन मन्यते ॥

प्रधानः—ज्ञातं किंचित् । परं स्पष्टीक्रियताम् ।

भिषग्वरः—शय्यापबद्धः व्याधिवदन्यपीडितश्च रुग्णः स्वकृति-निरीक्षणार्थम् प्रार्थनानुसारम् आगतं भिषग्वरं देवमिव मन्यते ।

आबारावः—सुष्टु । ततः

भिषग्वरः—भिषजा दत्तस्य औषधस्य सेवनेन वेदनासु मनाक् प्रशमितासु स भिषग् रुग्णेन देवदूतः इव मन्यते ।

आबारावः—समीचीनं ! मनुजस्वभावोऽयम् । तत ?

भिषग्वरः—वेदनासु निःशेषं दूरीकृतासु स भिषक् सामान्यः एव मनुष्यः इति तेन रुग्णेन मन्यते ।

आबारावः—बहुधा निर्गते रोगे वैद्यराज उपेक्ष्यते, इति सुभाषितं प्रसिद्धम् एव ।

भिषग्वरः—न केवलम् उपेक्ष्यते परं, क्रूरः राक्षसः इव मन्यते रुग्णेन यदा भिषजा व्यय (बिल) नाम स्वदेयपत्रं पुरस्क्रियते ।

प्रधानः—अहो कृतघ्नता मानवस्य ।

आबारावः—'न यद्रविरपीक्षते प्रतिभयेक्षते तत् कविः ।' इति सम्यक् प्रतीतम् ।

प्रधानः—अथ कीदृशी प्रकृतिः [आरोग्यं च शालेय-विद्यार्थिनाम् ? नचिरादेव भवता परीक्षिता ते इति श्रुतम् ।

भिषग्वरः—न संतोषावहा परमार्थतः ।

आबारावः—कथं नु ?

भिषग्वर:—बहुसंख्यका: वयोऽनुलक्ष्य लघुभारा: प्रतीता: तोलने । दृष्टे: क्षीणत्वम् अपि न अल्पम् ।

आबाराव:—आम्, उपनेत्रधारिणां बालानां दर्शनं दु:सहं खलु भवति वीथिषु ।

प्रधान.—अपि श्रुतं यत् इनामदारस्य प्रथमश्रेणीधर: उपाधिधृग् बुद्धिमान् पुत्र: रवींद्र: विमानदल-प्रवेशार्थं परीक्षित: वैद्यकीयदृष्ट्या अनुत्तीर्ण: लघु भरत्वाद् दृष्टिदोषत्वाच्च ।

आबाराव:—ज्ञातम् । विद्यार्थिनां बुद्धिसंवर्धने शासनेन यथा अवधीयते तथा न शरीरसंवर्धने इत्येवास्य कारणम् ।

प्रधान:—आम् । स्वातंत्र्योत्तरं पचविंशतिवर्षेषु व्यतीतेष्वपीमां पारतंन्त्र्य-कालीनां दुरवस्थां दूरीकर्तुं शासनं न करोति इति अहो ! दौर्भाग्यम् ।

आबाराव:—उद्याने नचिरात् कश्चित् विनोदयुक्त: संवाद: श्रुत: मया ।

प्रधान:—निवेद्यतां तावत् ।

भिषग्वर:—अवहितोऽस्मि ।

आबाराव:—वासंतीनामबालया माता पृष्टा 'अम्ब ! किं प्राध्यापक: असौ य: त्वाम् आपृच्छ्य इदानीम् इत: निर्गत:' । 'आम्, वत्से, किमर्थं हासं रोद्धुं न शक्नोषि ? मात:, कृशांगोऽसौ कथं नु अध्यापक: भवेत् ? भोजनसमये मया निरीक्षितं यत् मम आहारापेक्षयापि स्वल्पतरम् तेन भुक्तम् । मन्ये स्तोकेनापि वायुवेगेन तृणमिव स आकाशे उत्पात्येत इति ।

भामराव.—सावेशं कोणाद् उत्थाय पुर: उपेत्य महाशया: । स्वदेशीया व्यायाम-पद्धति: यावत् न सादरम् अंगीक्रियते सर्व-शालाभि: व्यायामविषय: च अवश्यत्वेन न निर्धार्यंते वार्षिकपरीक्षाम् उत्तरितुं तावन्नैव शारीरबल-संवर्धनस्य संभव: नवप्रजानाम् ।

प्रधान:—(शिक्षक:) किमर्थं शालाभि: ? आदौ एव आधुनिक: विद्यार्थी बहुसंख्यविषयभारेण निर्मर्यादं पीडित: ।

आबाराव:—अनावश्यक-विषयाणाम् अध्ययनं विलोपयितुं शक्यम् । उदाहरणार्थम्—लेखनिकव्यवसायं कर्तुकामस्य किं प्रयोजनं बीजगणित-भूमितिरसायनशास्त्रादिविषयाध्ययनेन । भाषाविषयेऽपि मातृभाषाया-सार्धम् आंग्ली-हिंदी-संस्कृत-उर्दू-प्रभृति-प्रमुखभाषासु काचन एका भाषा पाठयितुं शक्यते ।

प्रधानः—परं विषयाणां बाहुल्यम् तु तथापि भविष्यत्येव ।

भीमरावः—विषयोऽपि न्यूनः कर्तुं शक्यते ।

प्रधानः—को नुं खलु एतादृशः विषयः, यः इतीकर्तुं शक्यते ।

भीमरावः—कस्यापि विषयस्य दुष्परिणामानां सततम् अनुभवः, प्रेरयति तेषां परिहरणोपायस्य चिन्तने ।

प्रधानः—मम मूलः आक्षेपः संभाषणौघे तावत् दुर्लक्षितः । किमर्थं पालकैः पाल्यस्य शारीरबलसंवर्धने न आयासायितव्यम् । शाला-कालापेक्षया अधिकः कालः विद्यार्थिना गृहं नीयते । पाल्यपालकसंबंधोऽपि स्निग्धतरः स्वभावतः विद्यार्थिशिक्षक-संबंधापेक्षया ।

भिषग्वरः—भीमराव ! दीयतां प्रत्युत्तरम् इदानीम् ।

भीमरावः—मम मान्यवरमित्रस्य आक्षेपः तत्त्वतः स्वीकार्योऽपि व्यवहारदृष्ट्या अमान्यः भवति । पालकः हि इदानीं केवलं स्वापार्थं गृहे तिष्ठति न अतिशयोक्तिः अपितु सत्यम् । कार्यविरामदिने शिशुः पितरं दृष्ट्वा सकुतूहलं मातरं पृच्छति अम्ब ! 'कोऽसौ अतिथिः' इति । प्रातः पितुः स्वकीयं गृहत्यागानंतरं प्रबोधं प्राप्नुवन्, रात्रौ च तस्य प्रत्यागमनपूर्वं स्वपन् शिशुः नात्र अपराध्यति ।

आबारावः—वर्तते तत्रापि उपायः तम् अनुष्ठातुं सुधृष्टः समर्थश्च अधिकारी आवश्यकः ।

भिषग्वरः—उच्यताम् उच्यताम् ।

आबारावः—मुम्बापुरीसदृश्यः सर्वाः बृहन्नगर्यः शनैः शनैः संकोचयितव्याः । अनावश्यककार्यालयः स्थानान्तरं न सह्यः । दिष्ट्या भरतभूः विशाला । नवानि नगराणि निर्मातव्यानि आधुनिकसकल-सुख-साधन-प्रयुक्तानि । कर्मचारी तस्मात् स्वकार्यालयं दशपंचनिमेषेषु पद्भ्यां निवासात् गन्तुं शक्ष्यति । मध्यविश्रामकाले भोजनाय स स्वगृहम् आगमिष्यति । यथाकालं द्विवारं गृहे गृहिणीपरिवेषितं भोजनं लब्ध्वा कर्मचारी निरामयः स्थास्यति । सोऽद्यतनयातायात-श्रम-कालादीनाम् अपव्ययरक्षणेन परमार्थतः सुखी भूत्वा, चिरं जीविष्यति ।

रमाकान्तः—(लेखनिकः) (सोल्लासम् पुरतः आगत्य) किं दशपंचनिमेषेषु पद्भ्यां कार्यालयं गन्तुं शक्ष्यामि, मध्यान्तरे च गृहं गत्वा गृहिणी—

परिवेषितं भोजनं लप्स्ये । न विद्युद्रथयातायातम् ? अप्ययं स्वप्नः वा जागरः ?

आबाराव:—भिषग्वर, ! दृश्यतां तावत् रमाकान्तमहाशयस्य उल्लासः प्रकटितमात्रे उपाये । अद्यतन-कष्टमय-जीवनपद्धत्या निर्विण्णः सः अत्यातुरः शांतिमयजीवनलाभाय । वयस्य ! स्वप्नमयोऽपि अयं विचारः प्रत्यक्षे अवतारयितुं शक्यः यथा स्वातंत्र्यं भारतभुवः स्वप्ने दृष्टं देशभक्तैः ।

लंबोदरभट्टः—(प्रविश्य) वयस्याः, विस्मृतं भवद्भिः यत् इदम् आहारविहार-मंडलम्, न तु चर्चामंडलम् । सर्वेऽपि पदार्थाः सिद्धाः । अतः प्रथमं उदरपूरणम्, पश्चात् विचारणम् ।

भिषग्वरः—भट्टः बुभुक्षितः दृश्यते । (सायन्) आदिशतु भवान् पात्रसिद्धतायै । दशपंचनिमेषेषु आगच्छामः वयम् ।

भट्टः—मा विलंब्यताम् (निष्क्रांतः) ।

भिषग्वर—भीमराव ! विदेशीयाः क्रिकेट-हॉकी-फुटबॉल-प्रमुखा व्यायामाः किमर्थं त्याज्याः । अस्माभिः पुरः किं न गतव्यं जगता सह । किं सर्वमपि नवं त्याज्यम् ?

भीमरावः—वयस्य ! न तथा मेऽभिप्रायः । सामान्यजनस्य ताः क्रीडाः न सुलभा महार्घत्वात् । देशीयाः व्यायामप्रकाराः नमस्कार-दंडादयः गृहे ग्रामांतरे किमुत विश्रामगृहेऽपि सेवितुं शक्याः व्यक्तिशः नियमेन । स्वयं मया कार्यार्थंभ्रमणकाले चिरात् स्वीकृतः नमस्कारनियमः परिपालितः अस्थाने लज्जात्यागेन इति ज्ञायताम् ।

भिषग्वरः—अधिकारः खलु भवतः अतः, एवम् उपदेष्टुं स्वयमनुतिष्ठतः ।

प्रधानः—परं वयस्य, व्यायामोत्तरं किं पुष्टिकरं खादितव्यं शुद्धदुग्ध-घृताभावे ।

आबारावः—किं नु चणक-भूफलादयः पदार्थाः असुलभाः । रात्रौ जले तान् मज्जयित्वा प्रातः व्यायामोत्तरं सेवितव्याः सुखेन दंतैः सम्यक् चूर्णीकृत्य ।

[लंबोदरः उच्चैः शब्दापयति, भो वयस्याः त्वरध्वम् त्वरध्वम् इति श्रुत्वा]

भिषग्वरः लंबोदरमहाशयः आह्वयति नः द्रुतम् । अद्य दिष्टया नः सुख-संवाद. मुक्तिचर्चायां प्राप्तम् इति प्रमोदावहम् । ततः अस्मासु

केचन वयस्याः तावन्मूका अपि नूनं सुविचारवन्त इति अतीतम्। साधयेम ।

× ×

अंकः १ प्रवेशः ३

[माध्यमिक-शाला, शिक्षकविश्रामकक्षः]

प्रधानः—वयस्य, अहो उपहासशीलत्वम् अविनीतत्वं च आधुनिकविद्यार्थिनाम्। सव्यंगं शिक्षकम् उपहसितुं पीडयितुं च सकृत् ते प्रवृत्ताः नैव विरमन्ति तदुद्यमात्। ततः उद्विज्य वराकः शिक्षकः एव अन्ते शालान्तरम् आश्रयते। दुष्करा खलु इयं शिक्षकवृत्तिः संवृत्ता।

कर्णिकः—किं किं विशिष्टं घटितं येन एवं शोच्यते भवता स्ववृत्तिः ?

प्रधानः—किं न श्रुतं यद् पन्तेन शालान्तरं प्रार्थितं धनकालापव्ययमपि स्वीकृत्य। नववर्षारंभे तत्सहकारवंचिताः वयं भविष्यामः।

कर्णिकः—किमेवं परिणतः छात्रैः आचरितः उपहासः शालात्यागे गुरोः ? विचारणीयः खलु अयं प्रश्नः।

प्रधानः—किं वराकः गुरुः करिष्यति ? आपणे, रथ्यायां वा गुरौ दृष्टमात्रे 'भो! वयस्या! आगतः बकः! सावधानम्' इत्येवं यदि श्रुतिपुटयोः आपतेत् अनिशम् उपहासः, स गुरुः तितिक्षायुक्तः अपि कियदवधि मर्षयेत् विद्यार्थिभिः क्रियमाणं स्वोपहासम्।

कर्णिकः—विधिना निर्मिता गुरोः तालवृक्षवत् शरीरयष्टिः वा बकदृष्टिः वा अन्यद् शारीरिकं व्यंगम् एव अनुलक्ष्यते छात्रैः न तु तस्य विद्वत्ता सम्यग् अध्यापनपद्धतिर्वा इति शोचनीया नूनं प्रवृत्ति। यथार्थ-उपमा-प्रदाने छात्रैः आविष्कृतं बुद्धिवैभवं यदि अभ्यासे युज्येत तर्हि परं वृथैव इदानीं यदि-तर्हि-प्रयोगः। चित्रपटाः रहस्यकथाः, अति-गूढं श्रूयमाणं कर्णोद्वेगकरं प्रणय-संगीतं, विद्यार्थि विद्यार्थिनां सह-शिक्षणं सुदूरस्थितं-शालागमनार्थं क्रियमाणं दैनंदिनं गतागतं, ततः लभ्यमानं स्वैरसंचारस्वातन्त्र्यम् धनस्य सौलभ्याम् इत्यादिभिः सामान्यः विद्यार्थी यदि उच्छृङ्खलः न भवेत् तर्ह्येव आश्चर्यम्!

प्रधानः—वयस्य, विद्वत्ता, अध्यापननैपुण्यम् आभ्यां सार्धं च वदनप्रसन्नता, वाङ्मधुरता, विनोदप्रियता इतीदृशाः गुणाः अपि आत्मसात् कर्तव्याः यशोलिप्सुना शिक्षकेण।

कणिकः—मान्यः भवताम् अभिप्रायः परं ते न साध्याः सर्वैः स्वभावदोषेण ।

सौ० सामंत (सत्वरं प्रविश्य)—कणिक-प्रधान-महाशयौ, शिक्षकस्य वृत्तिः इदानीं कठिनतरा संवृत्ता । छात्रस्य औद्धत्यं परां कोटिं गतम् । भीताऽस्मि ।

प्रधानः कणिकः—किं भूतम् ? निवेद्यतां तावत् भयकारणम् ।

सौ० सा० (मन्दस्वरेण)—वराकः नवशिक्षकः केनाऽपि छात्रेण चपेटया ताडितः कपोले !

उभौ—अहह ! अम्बेकरः ताडितः ?

सौ० सा०—आम् ! मुख्याध्यापकं द्रष्टुं गतः सः ।

प्रधानः—किमत्र मुख्याध्यापकः करिष्यति ? ईदृशी आपत्तिः शिक्षकेन स्वयं स्ववर्तनकौशलेन परिहर्तव्या इति युक्तम् ।

कणिकः—अस्मिन् विषये सत्यासत्यनिर्णयकृते विहितं प्रकटान्वेषणम् अपायकारि स्यात् शिक्षकस्य । अस्य मूलकारण रहः संशोधयितव्यम्, यदि तस्य च उन्मूलनम् अशक्यम् इति प्रतीयेत, मौनम् आश्रयितव्यं गुरुणा ।

सौ० सा०—अवमानं विषह्य ?

कणिकः—आम्, अवमानं विषह्य विस्मृत्य च; अध्यापन-कार्यं प्रचालयितव्यं वा त्यक्तव्यम् वा ।

प्रधानः—स्वातन्त्र्यकालापेक्षया पारतन्त्र्यकाले विद्यार्थी विनीततरः आसीत् इति विपरीतं खलु दृश्यम् ।

कणिकः—पारतंत्र्ये स्वातन्त्र्यार्जनध्येयेन समाकृष्टः विद्यार्थी स्वाध्याये लब्धे अवसरे च स्वातंत्र्ययत्ने दत्तावधानः आसीत् । स इदानीं पालकैः गृहम् आनीयमानं प्रणयप्रधानं साहित्यं, तस्मिन् वर्तमानानि उत्तान-शृङ्गारप्रदर्शीनि चित्राणि, चित्रपटप्रेक्षण, शालाप्रवर्तिताः संगीत-नृत्य-नाट्यादीनां विद्यार्थि-विद्यार्थिनीनां सचित्राः सांस्कृतिकप्रयोगाः इत्यादिभिः विचलितमनाः आस्ते ।

प्रधानः—नगरे नगरे महाविद्यालयीयैः छात्रैः स्वमतम् अन्यायं दूरीकर्तुम्, अभीष्टं वा संपादयितुम् आचरितं ... प्राचार्यस्य गति-

प्रतिबंधकं परिवेष्टनं, (घेराव) वा अभियानम् (मोर्चा) इत्यादि-घटनानां क्षोभकवृत्तानि अपि छात्रमनसि अधुना विक्षेपं जनयन्ति ।

सौ० सामंत—सत्यम्—परं केनाप्युपायेन छात्रमनः परिरक्षणीयं ईदृशेभ्यः विक्षेपकारिभ्यः कारणेभ्यः ।

प्रधानः—केन कथम् ? इति तु जटिलः प्रश्नः ।

कर्णिकः—न अत्र केवलं छात्रः अपराध्यति ।

सौ० सा०—अथ कः अपरः अपराध्यति ।

कर्णिकः—पालकः शिक्षकः शासनं च इति त्रयम् एव ।

सौ० सा०—कथं नु ?

कर्णिक—पालकः पाल्यसमक्षं शिक्षकविषये शिक्षकहतकः इति शब्देन अनादरं जनयति पाल्यमनसि । गृहपाठे असंपादिते वा विना कारणम् अनुपस्थितौ, शिक्षकेण अर्थितं पत्रं स्वव्यवसायमग्नः पालकः अविचार्य सद्यः ददाति वा अतिलालितपाल्येन यथेष्टं लेखयति स्वाक्षरीम् आदौ एव पत्रे विधाय ।

सौ० सा०—धिक् कर्तव्यच्युतिं पालकानाम् ।

प्रधानः—श्रूयतां तावत् कस्यचित् श्रीमतः पुत्रस्य कथा—न कपोलकल्पिता इयम् ।

सौ० सा०—अवहितास्मि ।

प्रधानः—सत्यम् आश्रयितव्यम् इति अध्यापितेन वणिक्पुत्रेण अनवधानात् ग्राहकाय ऊनं धान्यं दत्तम् । तत्-पश्चात् अभिज्ञाय सद्यः एव स धावित्वा प्रग्राहकं प्रत्यानीय ऊनं यद् दत्तं तत् समर्पयामास । एतद् वृत्तं सेवकात् ज्ञात्वैव जनकः कुपितः शिक्षकम् उपेत्य उवाच एवं यदि मत्पुत्रः सत्यम् अनुसरिष्यति मम वृत्तिः एव उत्सन्ना भविष्यति ।

सौ० सा०—ततः ?

प्रधानः—शिक्षकः अवाक् तस्थौ । यतः स पालकः धनाढ्यः संस्थायाश्च आधारस्तम्भ आसीत् । अन्यच्च पिता मोटरयानेन भ्रमति शिक्षकश्च वराकः पद्भ्यामिति दृश्यमपि शिक्षकविषये छात्रमनसि अनादरम् उत्पादयति ।

सौ० सा० - अहो वराकः शिक्षकः ।

कर्णिकः—अथ श्रूयतां शिक्षकदोषाः ।

सौ० सा०—मार्गदर्शकाः स्युस्ते खलु मादृश-नव-शिक्षिकायैं ।

कर्णिकः—अध्यापनीयविषयस्य अपूर्णं ज्ञानं दुर्व्यसनासक्तिः समभाववर्तनस्य अभावश्च लघू कुर्वंति शिक्षकं छात्रवर्गे । सहशिक्षणे तु इदानीं शिक्षकेण अतिशुद्धशीलेन वर्तितव्यम् । कश्चित् प्रौढः कस्यामपि विद्यार्थिन्यां साभिलाषम् अपश्यत् । तत्क्षणे एव सा विद्युदिव उच्चैः सकोपम् उदगिरत्—किं भवतः कन्या न वर्तते । धिक् तं शिक्षकं, यः विद्यार्थिन्यां पापदृष्टिं निक्षपति ।

प्रधानः—युवतीनां यौवनभरस्य उत्तानवेषभूषायाश्च प्रभावः अयम् श्रूयताम् —

गौरांगमुन्नतमुरो हृदि दृक् तुदन्ती
कृष्णालकाश्च रुचिरा बहु वेषभूषा ।
वाक् स्नेहयुक्तमधुरा स्मितमुच्चहास्यम्
इत्यादि नव्ययुवतेर्न विमोहयेत् कम् ?

कर्णिकः—अहो ! अत्र सामन्तमहाशया उपस्थिता इति विस्मृतं किम् ।

प्रधानः—हन्त ! विस्मृतं मया । अत्रभवती मां क्षन्तुम् अर्हति ।

सौ० सामंत—(कथं चायः नाद्यापि परिवेष्यते) ।

चायवालः (प्रविश्य)—अयं चायः । क्षम्यताम् । दुग्धं बिलंबेन प्राप्तम् ।

प्रधानः—(चायं पिबन्) छात्राणाम् औद्धत्यं परिपुष्यते शासनेन दण्डोपयोगं निषिध्य इति न असत्यम् ।

कर्णिकः—दोषभागपि विद्यार्थी विद्यार्थिनीनां समक्षं शिक्षकेण कृतं स्व-निर्भर्त्सनम् असहमानः स्वयं शिक्षकं दण्डयितुं प्रततंते इत्यपि अवितथम् ।

(ठण् ठण् ठण् इति घण्टानादः श्रूयते)

सौ० सामन्त—अयि ! विश्राम-कालः समाप्तः । अद्य शिक्षक-छात्रसंबंध-विषये दुर्घटनानिमित्तेन संवृत्तया चर्चया स सार्थतां खलु नीतः । गच्छेम स्वस्व-छात्रवृन्दम् ।

(सर्वे निष्क्रांताः)

इति प्रथमोऽङ्कः

## अथ द्वितीयोऽङ्कः

### प्रवेशः १

[दिवाकर-सदनम्—सुधा नृत्यं करोति नलिनी पेटीं वादयति, शान्ता, गंगु आनन्दः दिवाकरः, तत्पिता बापुरावश्च शृण्वन्ति नृत्यगानम् उपदिष्टा ]

सुधा — अयि ! मुञ्च ! मुञ्च मे कृष्णाऽञ्चलमथ ।
रुणद्धि मा मा पन्थानम् ॥ ध्रु० ॥
विलंबितं मे गमनं सदनं,
जनयेत् श्वश्रूजनकोपम् ।
क्लेदय मा मां भित्त्वा कुंभम्
विनोद समुचित एष नैव खलु
कालो ह्यपसर रे ! शीघ्रम् ॥ १ ॥

[मध्ये एव पंडितः प्रविश्य आसने उपविशति शृणोति च सस्मितम् ।]

नलिनी—भ्राता, कोऽभिप्रायः ?

पंडितः—शोभनम् ! शोभनम् ! क्षणैकं देवसभायामेव उपविष्टोऽहमिति मया अनुभूतम् ।

नलिनी बालानां प्रवृत्तिम् अभिज्ञाय सा यावच्छक्यं परिपोषयितव्या पालकैः एवम् ।

शान्ता—अवश्यमेव ततो हि अभ्युदयस्तेषाम् ।

दिवाकरः—प्रतिकूलपरिस्थितिकारणेन कापि कला मया अध्येतुम् अशक्या अभूत्, अतः कन्या कलानिपुणा यथा भवेत् तथा प्रयते ।

नलिनी—महिलामंडलया आयोजितायां नृत्यगानस्पर्धायां सुधा पारितोषिकम् अवाप्तुम् ईहते । शिक्षकः अपि आयासयति तस्याः सिद्धतायै यशास्वितायै च ।

पंडितः—प्रशंसनीया खलु शिक्षकस्य आत्मीयता । परम्—

नलिनी—परम् किम् ? तव सर्वदा 'परम्' पुरः सरति ।

पंडितः—(स्मयन्) अनुज्ञातश्चेद् आत्मनः स्पष्टाभिप्रायं प्रकटीकर्तुमिच्छामि तदपि सुधा-हितकामनया ।

नलिनी—अनुज्ञायाः किं प्रयोजनम् ?

पंडितः—हितमपि आधुनिककाले वक्तुं कृच्छ्रोपमं खलु । भणामि, सुधा उपवरा आस्ते । अतः गृहिणी-योग्ये पाकक्रियादेः शिक्षणे तत्क्रियासु कौशले च अवधानं कदा दीयेत ।

नलिनी—भ्रातः ! पश्य ।

भूयो मार्जनमम्भसश्च भरणं पाकस्य चायस्य च
संसिद्धिः पट-पात्र-शोधन-कृतिश्चापत्यसंगोपनम् ।
सत्कारोऽप्यतिथेर्ललाटलिखितान्येव स्त्रियास्तद्-हृदि
कर्मण्यापतिते स्फुरेत् कुशलता, गानं यथा पेषणे ॥ (शा० वि०)

(पंडितः बापूरावं साभिप्रायं पश्यति)

बापूरावः—नापृष्टः कस्यचित् ब्रूयाद् इति नीति—शास्त्रस्य आदेशः । अतिथिरिव कतिपयदिवसार्थम् आगतोऽहम् । चिरञ्जीवः स्नुषा च उभौ प्रौढत्वं प्राप्तौ—हिताहितं च ज्ञातुं समर्थौ । इदानीम् मादृशेन जरठेन संसारे, जले पद्मपत्रमिव स्थातव्यं भगवन्नामचिन्तने इति एव युक्तम्—सर्वेषां च सुखावहम् ।

पंडितः—तात ! भवता अनुसृता नीतिः कालोचिता । परं यौवनोत्साहभरः समाजहितचिन्तातुरत्वं च वादयतः मया हितं बलात् परिणामजन्यरोषस्यापि स्वीकारसिद्धतया ।

नलिनी—भ्रातः ! इदानीं न कोऽपि उपहसति प्रौढां कुमारीम् । पाकक्रिया तु जन्मतः एव विधिना लिखिता स्त्री-ललाटे किं तच्चिन्ताकारणम् ? प्रस्फुरेत् सा विद्या समये वत्सायाम्, यथा गानं पेषणसमये । विवाहपूर्वम् अधिकाधिकविद्या कला च संपादयितव्ये अनया इति इच्छामि । पश्य तावत् कौमार्ये अधीतं पेटीवादन-कौशलम् इदानीं मे साहाय्यं करोति ।

सुधा—मातुल, निर्विशेषः खलु आनन्दः कलोपासनायाम् । अस्यां प्रावीण्यं सम्पाद्य किमर्थं कीर्तिः न समर्जयितव्या । तारका इव प्रकाशितुम् मे उत्कटेच्छा ।

पंडितः—चित्रतारका इव ?

सुधा—नहि, आकाशस्थतारका इव।

पंडितः—ध्येयम् उच्चं खलु, परं ध्येयसिद्धिप्रयत्ने विनाशगर्ता न दृश्यन्ते यथा चिल्लस्य उड्डायने लुप्तदेहभावेन मार्गस्थिता वापी। काचित्कुमारी नृत्यगानप्रावीण्येन चित्रपटसृष्टिं प्राविशत्। तत्र महतीं कीर्तिं सम्पाद्यापि कियत् सुखं सा आन्तरिकं लब्धवती इति प्रथितमेव।

दिवाकरः—न केवलं नृत्यगानं शालेयशिक्षणेन सह सा अधीते इदानीं, परं महाविद्यालयीयं शिक्षणमपि सा ग्रहीष्यति यथाकालम्।

पंडितः—समीचीनम्। परं तत्रापि सहशिक्षणेन अस्याः च कलाप्रावीण्येन मर्यादाभंगः यथा न भवेत् तथा आत्मसंयमः अवश्यम् करणीयः इत्येव सूचयामि।

नलिनी—वत्सा निगृहीतविकारा स्थास्यति इति विश्वसिमि। किं, नु जाते ?

सुधा—आम्, अम्ब ! न ते विश्वासम् अन्यथा करिष्यामि। मातुल, स्खलन्ति काश्चित् विद्यार्थिन्यः सहशिक्षणेन तत्तु अपवादात्मकम्। भवतः प्रोत्साहनं कांक्षे न भयदर्शनम्।

पंडितः—(उत्थाय) अथ आपृच्छे सर्वान्, गन्तव्यं मया कस्यापि दर्शनाय।

नलिनी—भ्रातः, पत्रेण विदितमेव यद् वत्सस्य उपनयनसमारोहः निश्चितः। कुलोपाध्यायः नचिराद् आगच्छति। दिष्ट्या भवान् उपस्थितः। भवत्समक्षं कार्यस्य रूपरेखाया निश्चयः युक्तः युक्ता स्यात्।

दिवाकरः—तथैव मेऽभिमतम्।

शांता—ईदृशमंगलसमारोहस्य आयोजने मातुलस्तु प्राधान्यं भजते। गम्यताम् आयोजनानन्तरम्।

पंडितः—विदिता एव सर्वेषां वः मे मतभिन्नता अस्मिन् विषये। उपनयनान्तरं बटुः यज्ञोपवीतधारणमात्रं करिष्यति; न संध्यावंदनम्। कुतस्तदाशयज्ञानपूर्विका उपासना? कतिपयमासानन्तरं तदपि यज्ञोपवीतं नागवन्ते वा देवगृहे अनावश्यककृच्छ्रत्वेन कथमपि निक्षिप्यते। केवलं समारोहाडम्बरं मम तु सर्वथा असम्मतम्। द्रव्यापव्ययः एव सः। प्रतिश्रूयते किम् उपाध्यायाद् बटोः संध्याध्ययनं नियमेन संध्यावंदनं च।

नलिनी—इदानीं च तदाचरति कोऽपि इति। ५२

दिवाकरः—पिता च स्वयम् अधीतः अपि कार्यवशात् न संध्यामुपास्ते कथं नु पुत्रेण सा हठात् नियमेन अनुष्ठापयितुं शक्या ?

पंडितः—इदं तु असमर्थनीयम् । लोकाचारः हानिकरः इति प्रत्ययं लब्ध्वापि तद्विरुद्धम् आचरितुं न मनोधैर्यम् इति सत्यम् । किं निष्फलवादेन । एवं सति किं मम उपस्थितिप्रयोजनम् आयोजनचर्चायां समारोहस्य ।

नलिनी—अग्रज ! यत् त्वं भणसि तत् सत्यम् ,किंतु अस्य समारोहनिमित्तेन सर्वसंबंधिजनानां दर्शनम् अन्यथा च दुर्लभः सहवासः—भवतु सः अल्पकालीनः—लभ्येते । कष्टमये आधुनिकजीवने ईदृशाः कति समारोहाः निर्वर्तयितुं शक्याः मध्यमवर्गीयेण समाजेन ।

शांता—मातुल ! इमानि कारणानि स्वीकरणीयानि भवेयुः भवता इति मन्ये ।

पंडितः—स्वीकरोमि आर्ये ! परं नोत्सहे चर्चाम् उपस्थातुम् इत्यपि सत्यम् । यतः अन्यदपि बलवत्तरकारणं वर्तते ।

नलिनी—उच्यताम् ।

पंडितः—समयपरिपालने अहं सदैव दक्षः स्यातु प्रयते, यतः तत्र प्रमादेन कार्यहानिर्भवति ।

नलिनी—भ्रातः, किं न ज्ञायते भारतीयकालः इति प्रथिता लोकोक्तिः ? प्रायः सर्वेषु तथा व्यवहरत्सु भवता समय-परिपालने किमेवं निर्बध्यते ।

पंडितः—भगिनि, आंग्लेभ्यः सद्गुणाः न अस्माभिः भारतीयैः चिरसहवासेनापि आत्मसात् कृताः इति शोचनीयम् । तेन एव स्वातंत्र्योत्तरं दीर्घकाले निर्गतेऽपि वयं न परमार्थतः उन्नताः । सामाजिककर्तव्यान्यपि न वयम् अनुतिष्ठामः । वस्तुतः नैतिकदृष्ट्या वयम् अधोगताः स्वातंत्र्योत्तरम् । (शोचति)

नलिनी—भ्रातः, किमपि वक्तुकामः दृश्यसे, भण, मनोगतं भण ।

शांता—मातुलात् सर्वदा सामान्यसंभाषणे किमपि विशेषं व्यवहारोपयुक्तं ज्ञानं लभ्यते । उच्यताम् अवहिताः स्मः ।

पंडितः—लघुतमां कथां कथयामि । ५३

आनंदः (सानन्दम्) अयि मातुल ! कथां कथयसि किम् ? त्वरस्व ! त्वरस्व !

पंडितः—एकस्मिन् शनिवासरे मम सुचिरसहाध्यायी कार्यालये मां द्रष्टुं आगतः द्वादशवर्षानन्तरम् ।

सुधा—महान् खलु आनंदः स्यात् तद्दर्शन-संलपनस्य ।

पंडितः—आम् । तेन निमंत्रितः तस्य अनुजगृहं गत्वा चायपानादिना सह होरार्धं संभाष्य निवृत्तः अहम् ।

नलिनी—होरार्धमेव चिरदृष्टमित्रेण सह संवादः ?

पंडितः—आम् ! अन्येद्युः सायं पञ्चवादनसमये सुखसंलापाय मम गृहम् आगन्तुं प्रतिश्रुतं तेन ।

नलिनी—अन्येद्युः सः विलम्बेन आगतः इति बहुशः कथयसि ।

सुधा—वा निश्चितसमयपूर्वम् इति ।

पंडितः—नहि ! नहि ! स नैव आगतः न दृष्टश्च कदापि ततः अद्यावधि ।

दिवाकरः—तेन खेददर्शकं पत्रं प्रेषितं स्यात् ।

पंडितः—नैव । न पत्रमपि लब्धम् मया ।

नलिनी—न विशेषः स्नेहः स्यात् युवयोः ।

पंडितः—स्नेहः ? दृढः एव । आवयोः कृते प्रथमद्वितीयक्रमांकौ रक्षितौ इव । तस्य अनागमनेन होरैकः मया महता अस्वास्थ्येन कथमपि यापितः । वञ्चितोऽहं सुश्राव्यव्याख्यानश्रवणात् अकारणम् । सः स्थापत्योपाधिकारकः अस्ति इति तु विशेषेण शोचनीयम् ।

बापूरावः—असदृशमेव खलु उच्चोपाधिधारिणः ईदृशं समयभंगकर्म ।

पंडितः—मातापि तमभिजानन्ती द्रष्टुकामा च पुराणश्रवणाय नागच्छत् ।

नलिनी—अहह ! विरसः उभयोः ।

आनन्दः—प्रतिश्रुत्यापि नागतः वयस्यः मूर्खः इति मत्वा त्याज्य एव ।

शान्ता—आम् ! भगिनि, महिलामंडलेऽपि कतिपयभगिनीनां समयपरिपालनभावात् अस्माकं व्यर्थः कालक्षेपः भवति इति भूयः अनुभूतम् । प्रचोदयावः भगिनीः समयपरिपालनाय ।

पंडितः (उत्थाय)—मम कथाकथनं सफलभूतम् नमोनमः (निष्क्रांतः) ।

सुधा—स्मरामि [1]सुभाष-चरितान्तर्गताः आंग्लानाम् अनुकरणीयान् गुण-विशेषान्—

नियुक्तवेलावनदक्षतां च, निर्बन्धरक्षां च सदा क्रियायाम् ।
तेषामखंडोद्यमशीलतां च, दृष्ट्वा सुभाषः परमः प्रसन्नः ॥

—सर्गः ४. ३०

आंग्लभुवम् अध्ययनार्थं गतेन प्रसन्नेन बोसकुलभवेन सुभाषचन्द्रेण भारतस्थं स्वमित्रं प्रति पत्रे लिखितम्—

स्वबांधवैः सद्गुणपुञ्ज एष ग्राह्यो
भवत्युन्नतये सुशीघ्रम् ।

बापूरावः—हन्त ! स्वातन्त्र्योत्तरं बांधवैः तस्य वीरवरस्य सद्गुणग्रहणं न केवलं दुर्लक्षितं परं कर्तव्यच्युतिः उत्कोचग्रहणम् इतीदृशाः अवगुणाः एव स्वीकृताः सोत्साहम् ।

शांता—भगिनि, साधयामि । कार्यं मां प्रतीक्षते ।

नलिनी—सत्यम्, परम् अल्पकालं स्थीयतां तावत् । उपाध्यायाय नियुक्तवेला प्राप्ता । कथं नाद्याप्यागतः ?

शांता—भारतीयकालः तेन परिपाल्यते प्रायेण ।

भास्करभट्टः (प्रविश्य)—भारतीयकालः ? न हि ! नहि ! आंग्लेयकालः ! दृश्यतां मणिबंधस्थं मे निमेषयन्त्रम् । नियुक्तवेलायामेव अहं आगतः । इदं पत्रम् अवलोक्यतां भवतः उपाध्यायेन दत्तम् । (पुरस्करोति)

दिवाकरः—(उद्घाट्य अवलोक्य च) आस्यताम् । (आसनं निर्दिशति) (भास्कर भट्टः उपविशति) (पठति उच्चैः) आकस्मिक—कारणोद्भवेन स्वग्रामं गतोऽस्मि । अतः मम चिरसहाध्यायी वे० सं० भास्कर भट्टः आनन्दस्य उपनयनविधिं यथाविधि संपादयिष्यति । क्षम्यताम् । (भास्करभट्टं प्रति) नमोनमः, आचार्यः !

भा० भ०—नमोनमः । निवेद्यतां तावत् भवदीया मनीषा कार्यक्रमविषये ।

दिवाकरः—गुरुवर्य, कृच्छ्रं खलु उपपन्नम् भवतः निकटपरिचयाभावात् । शङ्कितोऽस्मि तदाविष्कर्तुं भवत्पुरतः ।

---

१. अस्य एव लेखकस्य काव्यबद्धं चरितम् ।

भा० भ०—अलं शंकया। उच्यताम्। किं नु तत् कृच्छ्रं यत् अशक्यम् संतरितुम्? करिष्यामि भवत्साहाय्यम् अवश्यम्।

दिवाकरः—वदामि। बटुः वपनं, यज्ञोपवीतधारणं च न कर्तुमिच्छति।

भा० भ० (स्मयन् साक्षेपम्)—पितरौ च तदिच्छां प्रमाणीकुरुतः। महदाश्चर्यम् खल्विदम्। प्रथममेव दृष्टम्। अयमेव स बटुः इति मन्ये। (आनन्दमुद्दिश्य) वत्स, किमर्थं वपने यज्ञोपवीत—धारणे च ते अनिच्छा?

आनन्दः—वयस्याः मां पुराणः प्रतिगामी च इति निन्दिष्यन्ति। न च मे रोचेते ते।

भा० भ०—यजमान, किं वत्सः उभयोः पित्रोः निदेशे न तिष्ठति? एतद्विधिद्वयं विना उपनयनसंस्कारकर्म, ओदनं विना भोजनमिव, वा सप्तपदीं विना विवाह इव निष्फलम्। नैव संपादयिष्यामि ईदृशम् अशास्त्रीयं कर्म।

दिवाकरः—वत्सः तु समारोहस्य प्रमुखस्थानं भूषयिता। अतः एवं सति तस्मिन् विषये बलप्रयोगः अशोभनः एव। किं कार्यम्? अज्ञानी सः।

भा० भ०—स अज्ञानः परं पितरौ तु ज्ञान सहितौ। वत्सहिताहितज्ञानिनौ। (ईषत् कोपेन) भवद्गृहे यष्टिः स्यात् दीयतां मे सा।

नलिनी—किं भवान् तं ताडयिष्यति।

भा० भ० —आम्! ताडनं विना नैव आज्ञापालनम्।

नलिनी—प्रथमः एकाकी पुत्रः नैव ताडितः आवाभ्याम्।

भा० भ०—अतः एव स पितृनिदेशे न तिष्ठति। कर्तव्य-पालने अवधारयति। धिग् इमौ पितरौ।

दिवाकरः—गुरुवर्य, अद्यतनकाले यजमानस्य इच्छानुसारेण उपाध्यायेन वर्तितव्यमिति युक्तम्।

भा० भ०—नाहं तादृशः सामान्यः उपाध्यायः। कर्तव्यबुद्ध्या एनं बटुं भवत्समक्षं कर्तव्यपालने अनुकूलं करिष्यामि। (सकोपम्) यष्टिः अपनीयतां शीघ्रम्।

शान्ता—उपाध्यायः यजमानमनोविरुद्धं तद्वत्सं ताडयितुं प्रवर्तते इति अश्रुतपूर्वा एव कथा।

नलिनी—उपाध्याय, अलं बलप्रयोगेन । यदि भवान् यथानिर्दिष्टं विधिं संपादयितुं नेच्छति तर्हि अपरम् अनुकूलम् उपाध्यायं संपादयिष्याम. ।

भा० भ० (वापूं प्रति)—तात, भवान् प्रायः नाधिकारं धारयति गृहेऽस्मिन् । कालमहिमा अयम् ।

भा० भ०—यजमान, भवतः उपाध्यायस्य आदेशेन अहम् अत्र आगतः न अनाहूतः। मम आगमनं विफलीक्रियते भवता । अथ साधयामि । परं सावधानम् । देहल्यां मया उल्लंघितायामेव अमुं निरपराधिबालम् उन्मादः अभिभविष्यति, अनिच्छया मम, परं धर्मशास्त्रावमानेन । अयं च मे गुरुचरणप्रभावः । अतः उच्यतां शीघ्रम् , धर्मशास्त्रं मान्यते वा अनर्थः स्वक्रियते वा ।

नलिनी—(भयाकुला सुता) नहि ! गुरुवर्य, नहि ! धर्मशास्त्रं मान्यते । मम वत्सः सर्वमपि यथाविधि करिष्यति ।

दिवाकरः— गुरुवर्य, ईदृशः प्रभावः भवतः ?

भा० भ०—किं प्रतीतिः इष्यते ? तर्हि अनुभूयताम् । साधयामि ।

नलिनी—(मार्गं निरुध्य) नहि नहि, मन्तव्यं निष्फलतया । आर्यपुत्र ! किमर्थं विषं परीक्ष्यते ? निश्चीयतां यथाविधि सर्वम् अपि संस्कारकर्म ।

शांता—गुरुवर्य ! इदानीं न ईदृशं तेजः दृश्यते द्विजे । अतः एव न कोऽपि तस्मिन् श्रद्दधाति । कथम् इदं तेजः संपादितम् ।

बापूरावः—कथयामि तत् । गुरुचरणसेवायां कृतेन दीर्घाध्ययनेन शुद्धाचरणेन च ।

भा० भ०—आम् तात ! बहवः उपाध्यायाः अल्पाध्ययनेन, दुर्व्यसनेन, दुराचरणेन च अश्रद्धाम् उत्पादयन्ति यजमानमनसि, आत्मनः यजमानांश्च दुर्गति-भाजनं कुर्वन्ति ।

दिवाकरः—गुरुवर्य ! क्षम्यताम् स एवम् उक्तम् अस्माभिः भवत्प्रभावस्य अज्ञानात् ।

भा० भ०—प्रीतोऽस्मि भवतः श्रद्धोज्जीवनेन । शुभे परिणते सर्वमपि शुभम् । द्रक्ष्यामि भवन्तम् अन्येद्युः प्रातः अष्टवादनसमये । इदानीं कार्यान्तरत्वरा मां बाधते । साधयामि ।

नलिनी—किं चायपानं विना गम्यते ।

भा० भ०—चायकाफीसदृशपेयानि मया त्यक्तानि ।

नलिनी—तर्हि रम्भाफलं स्वीक्रियताम् ।

भा० भ०—भगिनि ! दीयतां परं विभज्य । यजमानः यस्मिन् सहभागी न भवेत् तत् नैव मया सेवितव्यम् ।

नलिनी
शांता }—अश्रुतपूर्वः खलु नियमः ।

बापूरावः—अतः अश्रुतपूर्वः प्रभावः ।

[ नलिनी विभज्य रम्भाफलं भा० भट्टाय ददाति सः तत् भुंक्ते ]

भा० भ०—अथ आपृच्छे । नमोनमः ।

सर्वे (उत्थाय)—नमोनमः ।

[ चित्रगृहाद् बहिः प्रांगणे मध्यान्तरे रमणलालशेखरौ युवानौ धूम्रपानं कुर्वन्तौ संवदतः ]

रमण०—वयस्य! नायकः ययातिः नूनम् अतिशालीनः मे आभाति दुष्यंतापेक्षया। कूपाद् उद्धृतां ततश्च उपकारभारानताम् अनुरक्तां च देवयानीं किमर्थं गांधर्वेण विधिना न सः पर्यणयत् । मूर्खः एव ! विवाहोत्तरम् उभाभ्यां शुक्राचार्यम् अभिवादयितुं गंतुमेव उचितम् अभविष्यत् ।

शेखरः—वयस्य, अपि न जानासि कोपप्रकृतिं दैत्यगुरोः । भीतः सः तस्मात् प्रायेण ।

रमण०—जानामि । परं कन्यावात्सल्यप्रभावात् विलयम् अयास्यत् सः कोपः हिममिव सूर्योदयात् । एतत् कचस्य पुनरुज्जीवनसमये नैकवारं दृष्टम् । अन्यच्च कचशापात् नासीत् देवयान्याः द्विजपतिलाभसंभवः ।

शेखरः—दिष्टचा हस्तगता सुंदरी तेन अचतुरेण अनुपभुज्य अपसारिता अनाघ्रातं सुरभि—पुष्पमिव । देवयानी नानुकूला अदृश्यत प्रणय चेष्टायै इति तर्कयामि ।

रमण०—रे, रमणीनां स तु स्वभावः । पश्य—

उद्बाहुर्न स्वयं योषा प्रियाश्लेषे प्रवर्तते
प्रेम्णाकृष्टा तु मिथ्यैव रुंधती याति तद्वशम् ॥

शेखरः—वयस्य ! महाविद्यालये प्रणयविषयः अपि अध्याप्यते किम् ।

रमण०—न प्रत्यक्षम् अध्याप्यते। परम् अप्रत्यक्षं शाकुंतल-विक्रमोर्वशीय-सदृशानां प्रणयपूर्णनाटकानाम् अध्ययने सः निभृतं प्रविशति यौवनभर-समाक्रांतच्छात्रहृदयेषु। अन्यच्च समस्तवातावरणमपि प्रणयपोषकम्।

शेखरः—कथं नु।

रमण०—अपि न पठसि रंभादिश्रृंगार अधाननियत कालिकानि वा हेतुतः अज्ञानम् अपविशसि। विद्यालये युवतीनां केवलंदर्शम्; महाविद्यालये तु क्रीडाचर्चा संभाषणादिषु ताभिः सह अनिर्बंधप्रायं स्वातंत्र्यम्।

शेखरः—अहह! यदि गतवर्षे परिश्रमपूर्वकम् अभ्यासम् अकरिष्यम्, त्वत्सदृशं तत् लोभनीयं सौख्यं आस्वादयिष्यम्।

रमणः—अथ ऐषमः मा प्रमाद्यतां भूयः।

शेखरः—अवश्यम्, अवश्यम्।

रमण०—वयस्य! महाविद्यालयीनानि कौतुकानि नित्यं श्रूयन्ते, परं मादृशाः भाग्यवंन्तः विरलाः एव।

शेखरः—कथय तावत्।

रमण—एकदा गिर्यारोहणं गतः अस्मद्-छात्रवर्गः। यथाबलं प्रत्येकम् आरोहणं आरब्धवान्।

शेखरः—ततः।

रमण—विद्यार्थिन्यः प्रथमं संघशः आरोढुं प्रारभन्त परं सर्वासाम् अग्रे शिखरं आप्तुं तासु स्पर्धायाम् उदितायां सामर्थ्यविषमतायाः ताः नचिराद् विभक्ताः बभूवुः।

शेखरः—स्वाभाविकमेव तत्।

रमण०—रोमहर्षणं तं प्रसंगं स्मृत्वा पुनः पुनः हृष्यामि।

शेखरः—कथय कथय शीघ्रम्।

रमण०—काचित् युवती कंटकलग्नवस्त्राञ्चलेन निरुद्धगतिः सहसा स्खलित-पादा मार्गे पपात, वेगवता आरोहणेन अतिश्रांता क्लान्ता चंडातपेन च नचिरात् मूर्च्छिता अभवत् इति अन्वारोहता मया दृष्टम्।

शेखरः—ततः धावित्वा तां त्वम् अवीजयः इति तर्कयामि।

रमण०—बाल्ये देशीयव्यायामेन संपादितं मे सामर्थ्यं तदा सफलीभूतम्।

शेखरः—कथं नु।

रमण०—अहं सद्यः धावित्वा तां निश्चेष्टां विलोक्य बाहुभ्याम् उद्धृत्य समीपवर्तिवृक्षच्छायायां नीतवान् ।

शेखरः—भाग्यवानसि खलु । कर्णे पृच्छामि (समीपं गत्वा मंदम्) अपि तस्याः अधरामृतपानं न कृतं त्वया वहनसमये ।

रमणः—मूर्ख ! कुतः रसः चुंबने गतप्राणायाः वा मूच्छितायाः वृक्षतले विकीर्णजीर्णपर्णशय्यायां तां शाययित्वा स्कंधस्थजलसंपुटात् जलम् उद्धृत्य तस्याः शिरसि अहं सिंचितवान् शनैः शनैः ।

शेखरः—अपि न कोऽपि छात्रः संनिधौ आसीत् ।

रमणः—न कोऽपि मम सुदैवेन तत्समये, परम् आगतौ छात्रौ नचिरात् पृष्ठतः ।

शेखरः—ततः ?

रमणः—तयोः एकः अग्रे प्रहितः मया सत्वरं शब्दापयितुं द्वित्रिविद्यार्थिनीः, अपरश्च प्रेषितः अद्यः दुग्धं चायं वा संपादयितुं निकटवर्तिनः कस्मादपि गिरि-पद-वासिनः ।

शेखरः—चतुरः खलु त्वम् एकमात्रेण उपलेन खगद्वयं विध्यन्—अथ ततः—

रमणः—जलसिंचनेन वीजनेन च सा प्रकृतिं मया प्रापिता यावत् लोचने उन्मीलयति तावत् दृग्भ्यां स्नेहं वर्षता मया तन्मुखे जलं स्तोकं स्तोकं पातितम् । सा उत्थातुं प्रायतत, परं मया निषिद्धः तस्याः प्रयत्नः इंगितेन ।

शेखरः—ततः ।

रमणः—ततः सहसा धैर्यम् अवलंब्य त्वाम् उत्थातुं साहाय्यं करोमि, मा भैषीः इत्यहम् आनतमुखेन वदन् तदधरामृतपानं कृतवान् ।

शेखरः—किं तस्याः चपेटाप्रहारः न लब्धस्त्वया कपोले ।

रमण०—लब्धः परं न सः क्रोधमूलकः बलवान् च अनुभूतः ।

शेखरः—असूयाहं खलु तव भाग्यम् । तव सामर्थ्यं सौंदर्यम् उपकारभरः इत्येतैः प्रायेण ते साहाय्यं कृतम् ।

रमण०—अरे क्रीडापटुत्वमपि । एतादृशीनां सौंदर्यखनीनां प्रोत्साहनपर शब्दमात्रेण मादृशाः यशोभाजः भवन्ति क्रीडास्पर्धायाम् । अन्यच्च ।

शेखरः—किमन्यत् ।

रमण—प्रणयकथाः पठित्वा, प्रणयप्रसंगांश्च चित्रपटे दृष्ट्वा युवत्यः प्रणय-

चेष्टातुराः कथमपि हठात् स्वभावनऽऽऽवेगं रुंधन्ति परंपरागतसंस्कृतिप्रभावात्; परं समये शरणं यांति प्रणयिनं, यथा मृत्तिकाबंधः सलिल प्रवाहस्य चंडावेगम् ।

शेखरः—अतः, पूर्ववत् यौवनप्रविष्टमात्राः कुमार्यः परिणेतव्याः इति युक्तं भवेत् । ततः वयमपि युवकाः समये एव अधिकृतं प्रणयिजनं लब्ध्वा समाहिताः, पराङ्गनादर्शनलालसाविमुखाः भवेयुः । वयस्य ! पश्य तावत् तत् स्वर्गीयं सौदर्यम् खाद्यशकटिकासमीपम् । अहो ! सफलता मम नयनयुगलस्य ।

रमण०—त्वयि कुसुमशरेण शरसंधानं कृतम् इति दृश्यते ।

शेखरः—वयस्य ! कथं नु आविष्कुर्यां मे मनोव्यथाम् । काव्यं प्रस्फुरितं मद्हृदये शृणु—

त्यजन्तीं स्वप्राणान् सरसि रमणीं भग्नहृदयां,
स्खलंतीं वा रभाफलकवचतः शीघ्रगमने ।
पतंतीं मूर्च्छायाः पथि दिनकरोच्चण्डकिरणैः,
कदा नु द्रक्ष्ये तामवितुमपि लप्स्ये सुसमयम् ।।

रमण०—नूनम् अप्सरा इव सा प्रतीयते, शापभ्रष्टा स्वर्गाद् अवतीर्णा ननु भूलोकम् । ममापि हृदयात् तस्याः कमनीयसौंदर्यदर्शनेन काव्यगंगा सवेगं प्रकटिता । पश्य तावत्—

रंभोरूः सा कमलनयना विभ्रमैमाहयंती,
सौवर्णाभा रुचिरवसना पूर्णचन्द्रानना च ।
वेणीं पृष्ठे नवसुमयुतां नागिनीभां दधाना,
नेत्राह्लादप्रदतनुरहो ! किं नु रंभोर्वशी वा ।।

अरुणः—(प्रविश्य) वयस्यौ, ययाति-दर्शनेन प्रणयालापप्रसक्तौ दृश्येते उभौ ।

रमण०—ईदृशस्वतंत्रवातावरणे युवकौ किमपरं कुर्याताम् । रमस्व सहावाभ्याम् । यदि अकालिकवार्धक्येन न समाक्रान्तं ते यौवनम् ।

शेखरः—अथ साक्षात्कृतं किंचिद् अविस्मरणीयं कौतुकं कथयामि मनःसमुल्लासकरम् ।

रमण०—अवश्यम्-यतः—

लब्धुं शक्या न खलु सकला मानवेनोपभोगाः ।
दुष्प्राप्यार्थं न सततमतस्ते न शोको विधेयः ॥
स्वस्माल्लोकान् हतभगवरान् प्रेक्षमाणेन तेन ।
भोक्तव्यास्तु प्रमुदितहृदा दैवलब्धा अवश्यम् ॥

अरुणः—सहमतोऽस्मि त्वया सह । शेखर, कथय तावत् दृष्टं कौतुकम् ।

शेखरः—दशवादनसमये बोरीबंदरस्थानके युगपद् वा एकैकशः प्रविशद्भिः विद्युद्रथैः सहस्रावधिपथिकाः प्रत्यहं प्रवाह्यन्ते । ते अवतीर्य त्वरन्ते स्वं-स्वं कार्यालयम् । आद्वितीयमहायुद्धकालात् कर्मचारि-युवति-गणः संख्यया प्रावृषि सरिदोघ इव प्रजवं वर्धमानः इदानीं कौतुकास्पदतां प्रतीत्य महत्त्वपूर्णतां नित्यनवविविध-रंगाकृतिवस्त्रालंकरणेन च नयनाऽऽह्लादास्पदतां गतः ।

अरुणः—आम् ! केचित् निरुद्योगिनः प्रणयवीराः दृष्टिसुखम् उपभोक्तुं तत्र इतस्ततः मंदं भ्रमंति इति सुप्रथितम् ।

रमण०— चर्चंगेटस्थानकेऽपि दृश्यते ईदृशं मोहकं दृश्यं दशवादनसमये ।

अरुणः—आम्, वयस्य शेखर ! कथय दृष्टं कौतुकम् ।

शेखरः—काचित् रमणी नूतनं मसृणवस्त्रम् आपदांगुष्ठं लम्बमानां धारयन्ती, नहि तेन स्थानकस्यधूलि मार्जयंतीव सत्वरं गच्छन्ती, अनुगच्छता केनाऽपि प्रणयिना प्रायेण वस्त्रोपांते कृतेन भारवता पदविन्यासेन हा ! सहसा स्रस्तांशुका संवृत्ता सभ्यानां च प्रदर्शनीयत गता ।

रमण०—प्रेक्षमाणानां पथिकानां च विनोदनास्पदतां गता ।

शेखरः—कैश्चित्तु उच्चैः विहस्य तालिकावादनमपि कृतम् ।

रमण०— केनचित् छायाचित्रमपि सद्यः गृहीतं स्यात् स्कंधात् लम्बमानेन सुसिद्धयंत्रेण ।

अरुणः—कस्मिंश्चित् केशकर्तनालये संपूर्णविवस्त्रयुवतीचित्रं दृष्टवा बालकम् अहं पृष्टवान् किमिदम् उचितं प्रदर्शयितुं सार्वजनिके आपणे तदा तेन प्रत्युत्तरितम्—



रमण०—किं ?

अरुणः—किम् औचित्य-अनौचित्य-विचारेण । ग्राहकसंख्यावर्धनाय अयम् उपायः मया आश्रितः सफलीभूतश्च असौ आकर्षकत्वात् ।

रमण०
शेखरः —कथय तत्संकेतम् ।

अरुणः—नेष्यामि वां तत्स्थलं स्वयमेव ।

शेखरः—सर्वप्रणयकथासु वा चित्रपटे नायकः कथमपि प्रेयसीं लभते । कथं नु मादृशैः तरुणैः प्रत्यक्षं सा लब्धव्या ।

रमण०—वयस्य ! तस्यापि शास्त्रं वर्तते त्वयि शालान्तपरीक्षाम् उत्तीर्य महाविद्यालयं प्रविष्टे, वाङ्मयशाखायां च वृतायां प्रणयशास्त्रम् अध्येष्यसे स्वयमेव स्वानुभवसहितम् ।

अरुणः—कथं नु सोदाहरणम् ।

रमण०—केचित् प्राध्यापकाः लावण्यवतीविद्यार्थिनीभिः प्रणयचेष्टाः कुर्वन्ति इति प्रथितम् । केचित्तु स्वमनोभावनां मनोव्यथाम् आविष्कर्तुं काव्यमपि रचयन्ति, प्रेयसीं प्रति च प्रेषयंति पुस्तकद्वारा । शृणु तावत् ।

शेखरः—अवहितोऽस्मि ।

अरुणः—अहमपि ।

रमण०—कयाचित् विद्यार्थिन्या प्राध्यापकात् सरणिः अर्थिता, लिखित्वा च विस्मरणेन स्ववक्षसि निहिता । तदा सरणिम् असूयमानः अध्यापक-महाशयः एवं व्यशोचत् ।

मत्तोऽधिका त्वं सुभगासि नूनं लावण्यवत्योरसि या निबद्धा ।
तद् हृद्गतं त्वं निभृतं निशम्य, प्रत्यागता मे कथयस्व वत्से ॥

शेखरः—वयस्य रमण ! प्रणयस्य यथाशक्ति प्रयत्नः अपरिहार्यः खलु यौवन-भरप्रमत्तानां युवकानाम् । विशेषेण महति समारोहे नववसनाभरण मंडितानां विविधसौंदर्यप्रसाधनोपयोगेन अभिवर्धितलावण्यानां च प्रमदानां दर्शनेन ।

अरुणः—परम् अस्थाने कृते प्रयत्ने सुंदरीणां पादत्राणप्रसादसंभवोऽपि वर्तते इति न विस्मर्तव्यम् ।

रमण:—बिना हि दुःखं भुवि को नु लाभः ?

अरुण:—हा ! प्रणयालापे देशकालौ विस्मृतिपथं गतौ । गच्छाव चायपानं कर्तुम् । संमर्दः विलुप्तः दृश्यते ।

रमण:—(मणिबंधस्थं निमेषयन्त्रं दृष्ट्वा) कथं नु चित्रस्य उत्तरार्धप्रारंभसूचकघंटा न श्रुता ।

अरुण:—पश्य ! पश्य ! विद्युत् रुष्टा विलुप्ता दृश्यते । चंचलेति तस्याः नाम अन्वर्थकं खलु ।

शेखर:—क्षुधातृषाकुलोऽस्मि । चायरवाद्यपणं संश्रयेम ।

( स्थलम्—चित्रपटगृहांगणम् )

शेखर:—विद्युतः प्रत्यागमनं प्रतीक्षमाणाः वयं कालं यापयितुं प्रारब्धचर्चासूत्रं गृहीत्वा संवदेम ।

अरुण:—वयस्यौ ! संवृत्ता चर्चा न केवलं पर्याप्ता परम् अतिरिक्ता इति मन्ये ।

शेखर:—आश्चर्यजनकः खलु नववयसः तव अयम् अभिप्रायः । अथ कथं कालं गमयितुम् ईहसे ।

अरुण:—वयस्य, यौवने प्रणयविषये युवकस्य स्वाभाविकप्रवृत्त्यां सत्यामपि, विद्यार्जने अधिकाधिकम् अवधानं दातव्यमिति मन्ये ।

रमण:—अरुण ! श्रीकृष्णेन, साक्षात् भगवता अपि प्रणयलीलाः बहुलाः कृताः, गीताश्च ताः सर्वैः कविवरैः व्यासमहर्षिप्रभृतिभिः सोल्लासम् । तत्र मानवैः किम् अपराद्धम् ।

शेखर:—मम हृद्गतमेव, रमण ! सखे, त्वया प्रकटितम् ।

अरुण:—कस्य अपि एकांतिकम् अनुकरणम् अयुक्तमेव । किमर्थं साधूनां परित्राणं दुष्कृतां च विनाशनं वासुदेव इव न क्रियते भवद्भ्याम् । श्रीकृष्णचरितरहस्यं न परमार्थतः ज्ञातम् उभाभ्याम् इति मन्ये अयं नावसरः तत् कथयितुम् ।

रमण:—अपि त्वया ज्ञायते ।

अरुण:—दिष्टया श्रुतं मया गोकुलाष्टमीप्रवचने ।

रमण:—तर्हि अवश्यं श्रावय मां तत् यथावसरम् ।

अरुण:—ददामि पठनार्थं तत्पुस्तकमेव । मया क्रीतं तदद्य ।

रमणः—तथा भवतु ! सादरं पठिष्यामि शेखर ! त्वयापि पठितव्यम् ।

शेखरः – अवश्यम् ।

अरुणः—अथ दृश्यमानचित्रविषये प्रणयपक्षमेव उद्दिश्य अस्माभिः संभाषितम् ।

रमणः—कोऽपरः तर्हि पक्षः तस्मिन् ।

अरुणः—ग्राह्यः बोधः दुर्लक्षितोऽस्माभिः ।

रमणः—निवेदय तम् । अवश्यं श्रोष्यावः ।

अरुणः—राज्ञः ययातेः धर्मभीरुत्वम् । देवयान्याश्च परिणयार्थं पितुः समादरणम् अनुज्ञासपादनं च ।

रमणः—सत्यम् ! उभौ अपि भारतीयसंस्कृतिम् अनुसरंतौ प्रशस्यौ अनुकरणीयौ च । ततः किन् ।

अरुणः—ययातिना उत्तरायुषि उद्घोषितः स्वानुभवः सुप्रथितः श्लोकबद्धः नाम—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

अखिलमानवानां कल्याणाय स उद्घोषः ।

शेखरः—परं सखे ! चिरोपभोगानन्तरं कृतः उदघोषितः सः । सुचिरम् उपोषितस्य अग्रे मिताहारस्य उपयुक्ततायाः व्याख्यानम् इव स अस्मादृशानां पुरतः ।

रमणः—पश्य ! पश्य ! तावत् शीतपेयापणसंनिधौ तिष्ठन्तीं युवतीं मल्लिकामुकुल-मालां वेण्यां धारयन्तीम् ।

शेखरः—नीलवस्त्रा ,आरक्तकंचुकिधृक् ननु ।

रमणः—आम् ! सा एव मम सहाध्यायिनी या गिर्यारोहणे मया मूर्च्छायाः उज्जीविता ।

शेखरः—(साश्चर्यं स्वगतम्) अहो ! सा तु सुधा मम भ्रातृकन्यका ! रात्रौ महाविद्यालयात् तस्याः विलंबितं प्रत्यागमनं ग्रंथावलोकनाय इति तया कथितं, सत्यतः प्रणयपूर्तये एव इति तर्कयामि । (प्रकाशम्) अभिनंदनम् ।

रमण:—शेखर ! आश्चर्यचकित: आशासे । नचिरात् आवां फाल्गुनराव-रेवती-भूमिकयो:—

( चित्रारंभसूचकघंटा निनदति )

अयि ! विद्युत् प्रसन्नात्त्वरयाम स्वंस्वम् आसनं प्रति ।

इति द्वितीयोऽङ्कः

अथ तृतीयोऽङ्कः

प्रवेश:—१

[ स्थलम् उद्यानम् काल: चित्रप्रेक्षणानंतरम् अतीत: सप्ताह: ]

( शेखर: अरुण: रमणश्च उपविष्टा: )

शेखर:—वयस्य रमण ! अभिनंदनम् ! प्रेयसी त्वया संपादितप्राया नाटक-प्रसंगेन इति मन्ये ।

अरुण:—ममापि हार्दिकम् अभिनंदनं स्वीक्रियताम् ।

रमण:—(सस्मितम्) न अभिनंदनार्ह: अयं जन: अद्यापि । अस्तु तावत् । का वार्ता विशिष्टा ।

शेखर:—दिष्टया अनुकूल: अवसर. इदानीं चित्रगृहे तदा अर्धत्यक्तं प्रणया-राधनाया: विषयं चर्चितुम् । कथं मन्यसे अरुण !

अरुण:—को नाम युवा नोत्सहेत प्रणयचर्चायाम् । रमणलाल: मार्गदर्शने अधिकारी इति विश्वसिमि ।

शेखर:—रमण, त्वया चित्रगृहे उक्तम्—महाविद्यालये-प्रवेशोत्तरं ज्ञात: भवेत् प्रेयसी-संपादन-मार्ग: विनायासम् इति । न तावत् प्रतिपालयितुं शक्नोमि । अत: इदानीं किम् आचरितुं शक्यं तत् कथय तावत् ।

अरुण:—वयस्य ! अवश्यम्—अवहितोऽस्मि ।

रमण:—दिष्टया कस्मिन्नपि पुस्तके मया अवलोकितं मार्गदर्शनम् अस्मिन् विषये—

शेखर:—अप्येवम् ? तर्हि कथय शीघ्रम्—

अरुण:—अहमपि उत्सुक: तत् श्रोतुम् ।

रमण:—उभयो: औत्सुक्यं तारुण्यभरस्य अनुरूपम् । शृणुतं सावधानम् ।

शेखर:—अवहितोऽस्मि ।

अरुण:—अहमपि ।

रमण:—श्लोकबद्धं तत्, प्रथम: श्लोकश्च अयम् । पठामि मंदम् अर्थावबोधाय—

लिप्सुः शीघ्रं हृदयरमणीं पौरयानेन गच्छन् ।
रक्षन् मुद्राः स्ववसनपुटे नैकमूल्याः प्रभूताः ।
कृच्छ्रे पार्श्वास्थितसुनयनां वीक्ष्य वाहस्यपण्यं
सद्य स्तस्या पटुयुवा स्निग्धदृष्टयै मदघात् ॥

शेखर:—वयस्य ! किंचित् ज्ञातम् । कृपया विशदीक्रियताम् आशयः ।

रमण:—अरुण ! त्वया ज्ञात: किम् आशय: ।

अरुण:—अंशत:—वाहस्य पण्यं कस्या: अपि कृते दद्यात् इति । कंठस्थीकरण-हेतो: प्राय: श्लोका: रचिता इति तर्कयामि ।

रमण:—आम्—चतुर: असि नूनम् । अथ स्पष्ट: आशय: ज्ञायताम्—प्रेयसीम् आप्तुकाम: युवा यदा पौरयानेन (City bus) गच्छेत् तदा लघुगुरु-पणकानि तेन प्रभूतानि रक्षितव्यानि स्ववस्त्रपुटके । समये समीपमेव उपविष्टा युवती यदि पणकाभावे वाहपण्य (Fare) प्रदातुम् असमर्था भवेत् यान-नायक: अपि तया पुरस्कृत-रूप्यकमुद्राया: प्रत्यर्पणीयानि पणकानि दातुम् असमर्थ: भवेत् तर्हि —

अरुण:— ज्ञातम्-ज्ञातम् यूना तस्या: कृते वाहपण्यं प्रदातव्यम्—शेखर ! कस्य लाभस्य अपेक्षया—

शेखर:— स्निग्धदृष्टचै ?

रमण:—साधु ! साधु ! पार्श्वस्थिताया: सुनयनाया: उपकारभारेण प्रीताया: स्नेहार्द्रदृष्टि-लाभस्य अपेक्षया इति ।

शेखर:—परम् ।

रमण—वत्स ! पृच्छ निर्भयम् ।

शेखर:—यदि पार्श्वस्थिता सुनयना न स्यात् ।

रमण—जडबुद्धे ! प्रणयार्थिना वर्ण: अविचारणीय: ।

अरुण:—तत:—अपर: कोऽपि पन्था: स्यात् ।

रमणः—आम् पञ्च श्लोकाः तत्र। अथ द्वितीयः श्रूयताम्—

उच्चश्रेणिप्रवेशदे* युवजनः क्रीत्वा समाकर्षके
वेषे चित्रपटालयस्य पुरतस् तिष्ठेत् प्रतीक्षापरः
दद्यादेकतमां तयोर्युवतये योपस्थितान्त्यक्षणे
नाप्त्वैकां तु निवर्तितुं जडपदैर्म्लानानना प्रस्थिता ।

कः आशयः शेखर !

शेखरः—चित्रपटालस्य पुरतः प्रतीक्षा कर्तव्या यूना—

रमणः—कस्याः अरुण !

अरुण—अंत्यक्षणे तत्र उपस्थितायाः परम् ।

रमणः—निःशेषाः विक्रीताः प्रवेशदाः ज्ञात्वा नष्टोत्साहा निराशया जडपदैः निवर्तमाना युवती यदि दृष्टिपथम् आगच्छेत् तर्हि ।

शेखरः—आदौ एव यूना क्रीता प्रवेशदा तस्यै सादरं समर्पयितव्या ।

अरुणः—शोभनम्—परं यदि सा तस्य मूल्यं पुरस्कुर्यात् तर्हि ।

रमणः—सधन्यवादं निषेद्धव्यम् ।

अरुणः—तर्हि कः लाभः ?

रमणः—रे ! प्रवेशदाद्वयं क्रेतव्यम् ।

अरुणः (सोल्लासम्)—अभिज्ञातः—अभिज्ञातः आशयः—यूना सा अनुगन्तव्या तया सह चित्रं च प्रेक्षितव्यम् ।

शेखरः—चतुरः खलु स लेखकः कविः नाम । कदा नु मम ईदृशं भाग्यम् उदियात् ।

रमण—वत्स ! प्रतिपालय । धैर्यम् अलम्बस्व ।

अरुणः—वयस्य ! अधीरता हानिकरी इति सुज्ञाः वदन्ति । रमण–गुरुवर्य ! ततः कः तृतीयः पन्थाः ।

रमणः—श्रूयताम् लोहमार्गस्थानके वा राज्य-परिवहन-मार्ग-स्थानके वा कथं प्रेयसी लब्धव्या तत् वर्णयति कविः ।

* Ticket.

स्वेदक्लिन्नां रुचिरवदनां पण्यपत्रक्रयार्थं
दीर्घश्रेण्यां युवतिमयसो वर्त्मना गन्तुकामाम् ।
अन्येनोत श्रमहतदृशा प्रेक्षमाणां विलोक्य
कृत्वाभीष्टं सपदि युवक: स्माययेत्तां सभाग्य: ॥

शेखर:—स्माययेत् अभीष्टं कृत्वा नाम वाहृ-पण्य-पत्रं क्रेतव्यं यूना दीर्घश्रेण्यां कष्टेन स्वक्रमं प्रतिपालयन्त्या: युवत्या: कृते इति ।

अरुण:—तस्या: कष्टनिवारणेन च तस्या: मुखे स्वाभाविकरीत्या उदीयमानं स्मितं विलोक्य आत्मानं धन्यं मन्तव्यं यूना इति अवशिष्ट: आशय: ।

रमण:—उभाभ्यामपि सम्यग् ज्ञात: स मार्ग: ।

अरुण:—परं नेदं साहाय्यं स्वद्रव्यव्ययेन अभिप्रेतम् इति मन्ये ।

रमण:—सा पर्याप्तं द्रव्यम् अवश्यं पुरस् कुर्यात् तत् स्वीकर्तुं न प्रत्यवाय: ।

शेखर:—यदि स युवा धनाढ्य: स्यात्, न स्वीकर्तव्यम् तेन इति मन्मतम् ।

रमण:—आम् ।

शेखर:—काचित् शङ्का मनसि उत्पन्ना ।

रमण:—वत्स ! पृच्छ । शङ्कान्वितस्तु विद्यार्थी प्रमुदे सर्वदा गुरो: ।

शेखर:—प्रेयस्या: अन्वेषणे, साहाय्यदाने च सा अविवाहिता आस्ते इति आदौ निरीक्षितव्यम् इति तर्कयामि ।

अरुण:—आम् ! अन्यथा सकल: प्रयास: वृथा भवेत् ।

रमण:—न अनिवार्यं तत् निरीक्षणम् ।

शेखर:—कथम् को लाभसंभव: विवाहितायाः साहाय्येन ।

रमण:—विवाहितायाः युवत्या: अनुजा, ननांदा वा कापि अन्या संबंधिनी स्थातुं शक्या ।

अरुण:—अभिज्ञातम्—अभिज्ञातम् सा युवती उपकारभरेण वशीकृता कृतज्ञतया उपकर्तुः कृते प्रेयसीं लंभयितुं प्रयतेत इति ।

रमण:—सुष्ठु ! सुष्ठु शिष्यवर्य: अध्याप्यमानं पाठं शीघ्रम् आत्मसात् करोति इति प्रशंसनीयम् ।

शेखरः—गुरुवर्य, अथ निरूप्यतां चतुर्थः पन्थाः—उत्कण्ठते मे मनः श्रोतुम् ।

रमणः— श्रूयताम्—

महालक्ष्मी-शिर्डी-सदृश-शुचि-यात्रा स्थलभुवि
जनाब्धौ सम्भ्रान्तां युवतीमवलोक्याप्यशरणाम् ।
युवा पृष्ट्वा कृत्वात्मनि च दृढविश्रब्धहृदयां
जनैस्तस्या युंज्याच्चतुर उत धाम्ना 'शुभ'कृते ॥

अरुणः—शुभ-कृते नाम शुभ-विवाहस्य कृते इति मन्ये ।

शेखरः—आम् ! यात्रा-संमर्दे स्वजनै वियुक्ता काऽपि संभ्रांता युवती अन्वेष्टव्या ननु ।

रमणः—आम् ! अन्विष्य तादृशीं दृष्ट्वा अग्रिमं कार्यं कुशलतया अनुष्ठातव्यम् । स परीक्षासमयः प्रणयिनः बुद्धिवैभवस्य ।

अरुणः—निवेद्यताम् तत् अग्रिमं कार्यम् ।

शेखरः—महल्लाभाय आयासाः अपरिहार्याः । प्रयतिष्ये बुद्धिसर्वस्वम् उपयोज्य ।

रमणः—शोभनम् । निर्भयम् अग्रे गत्वा स्निग्धेन मृदुना निष्कपटेन दयार्द्रेन च वचसा सा तथा प्रष्टव्या यथा सा सद्यः पृच्छति युवके विश्रब्धहृदया भवेत् ।

अरुणः—कठिनं खलु कार्यमिदम् ।

रमणः—न केवलं पृच्छतः वचसा निष्कपटेन भवितव्यम् परम् पवित्रया दृष्टचापि । अवधेयं यत् वक्तुः दृष्टि-सरणि-मात्रं निरीक्ष्य तस्य हृद्गतं भावम् अभिजानन्ति स्त्रियः नैसर्गिकरीत्या ।

शेखरः—एवं सति प्रेयसीसंपादनं न खलु सुलभं यथा मया तर्कितम् ।

रमणः—शिष्योत्तमौ ! वर्तते तत्र उपायः । यौवनसुलभे मनश्चापल्ये उत्थितेऽपि देवताभावेन उपसृत्य प्रष्टव्या सा युवती ।

शेखरः—ततः तस्यां स्वस्मिन् विश्रंभम् उत्पाद्य किं कर्तव्यम् ।

रमणः—सा तस्याः वियुक्तेन जनेन प्रयत्नैः संमर्दे एव संयोक्तव्या ।

अरुणः—कठिनम् एतत् ।

रमणः—अस्य संपादने अशक्ये संवृत्ते सति तस्याः गृहं सा प्रापयितव्या वियुक्तानां स्वजनानां पूर्वम्। इदं यशस्वितया यदि संपाद्येत निःसंशयं शुभलाभसंभवः नातिदूरः कृतप्रयत्नस्य प्रणयिनः।

अरुणः—अनुगृहीतोऽस्मि खलु गुरुवर्येण कृतेन यथार्थ-मार्गदर्शनेन।

शेखरः—सम्यग् अधीतः अयं विषयः गुरुवर्येण इति प्रतीतम्। प्रसादः महान् अयं मयि विहितः इति मन्ये। प्रयतिष्ये दर्शितान् मार्गान् अवलंब्य अभीष्टसम्पादनाय।

अरुणः—अथ आपृच्छे।

रमणः—स्थीयतां तावत्। किंचित् वक्तव्यम् अवशिष्टम्। तत् निवेद्य समापयामि मार्गदर्शनम्।

शेखरः—तर्हि उच्यताम्।

रमणः—विधिः निवेदितः, इदानीं निषिद्धं किं तत् कथयामि।

अरुणः—शास्त्रिवर्यः इव आभाति वयस्यः। अवहितोऽस्मि।

रमणः—श्रूयताम् !

पुर्यां दीपमहोत्सवः प्रणयिभिः सौवर्णकालो मतः
स्वच्छंदं प्रमदावमर्शनकृते संमर्दजे संभ्रमे।
अप्रेक्ष्योऽवमृशन् करः स च भवेत् प्रेक्ष्यः स्फुटो यद्यपि
क्रोधाविष्कृतिभर्त्सनेतरमहो शक्येत किं दंडनम्॥

शेखरः—मुंबापुरीसदृशे महानगरे विशेषदीपोत्सवः प्रणयचेष्टाकृते सुवर्णावसरः युवकैः मतः इति सत्यम्। कः कथं निषेधः अत्र।

रमणः—संमर्दस्य संभ्रमे युवतीनाम् अवमर्दने सुलभे, निष्प्रतिकारे, चिरातृप्त-वासनापूर्तिकरे च सत्यपि, अस्मात् मोहात् परावर्तितव्यं सभ्येन सुसंस्कृतेन यूना भाविसुखाय।

शेखरः—गुरुवर्य, आश्चर्यचकितोऽस्मि एतेन निषेध-निवेदनेन। कुतः इमे सुविचाराः भवन्मनसि दृढं लब्धपदाः।

रमणः—मातुः बाल्ये कृतैः सुसंस्कारैः।

अरुणः—अतः मातृदेवो भव इति वेदाज्ञा। क्षम्यताम्, मया भवान् सामान्य उच्छृङ्खलः प्रणयचेष्टाकुशलश्च युवकः मतः। ७१

रमणः—शिष्योत्तमौ वयस्यौ ! प्रेयसी अवश्यं लब्धव्या युवकेन, न परं तात्कालिकसुखाय । परं चिरवैवाहिकसुखाय सुगृहिणीपदे आरोपयितुं योग्या सुसंस्कृता च प्रयत्नतः लब्धव्या । अन्यैः निषिद्धैः मार्गैः गत्वा समाजविदूषणहेतुः मा भवत इति उभौ वाम् अपि स्नेहपूर्वकं प्रार्थये ।

अरुणः—न प्रार्थये, अपितु आदिशामि इति वक्तव्यम् ।

शेखरः—शिरसा धारयामि एनम् आदेशम् ।

रमणः—युवयोः इष्टार्थप्राप्तिः शीघ्रं भवतु ।

[नलिनी गृहकार्यमग्ना अंतःकोष्ठे, शेखरः बहिः अभ्यासमग्नः, वापूरावश्च भगवन्नाम जपन् करस्थतुलसीमालामणीन् पुरः सारयति]

नलिनी—(बहिरेत्य) देवर ! वत्सः आपणं प्रेषितः शाकक्रयणाय नाद्यापि प्रत्यागतः । किं नु विलम्बकारणं स्यात् ? यदि भवान् गच्छति—

शेखरः—आगच्छेत् स नचिरात् । मार्गे केनापि संगतेन मित्रेण सुखालापं कुर्वतः प्रायेण तस्य प्रत्यागमनं विलम्बेन जायते । इदानीम् अभ्यासमग्नस्य मम बहि प्रेषणं चित्तविक्षेपाय भवति । अभ्यासस्य उपेक्षा च पुनः आक्षिप्यते आर्यया । अतः क्षम्यताम् ।

नलिनी—हा ! दक्षिणाक्षि स्फुरति । जगदम्ब ! मा किमपि अशुभम् आपततु अस्मासु ।

शान्ता (प्रविश्य)—भगिनि ! आनंदः न प्रत्यायातः किम् । (मुखे खिन्नताम् अवलोक्य) अयि ! भवन्मुखकांतिः चिंताभ्राच्छादिता दृश्यते । तर्कितं कारणं, भगिनि ! तर्कितं कारणम् ।

नलिनी—(साश्रु) भीतास्मि दक्षिणाक्षिस्फुरणेन ।

शान्ता—सुवर्णघर्षणेन स्फुरणं तावत् प्रशाम्यताम् ।

नलिनी—सुवर्णम् ? अस्मिन् शासने तु दुरापम् ।

शान्ता—मंगलसूत्रे वर्तते, भगिनि !

नलिनी—आम् । (घर्षति) पाहि मां जगन्मातः । भगिनि ! अद्य आर्यपुत्रः प्रत्यागन्ता चिरभ्रमणात् । नित्योदरव्यथापीडितः, भ्रमणपरिश्रांतश्च दुर्दुहितुः वार्तया आत्मसंयमनाय अक्षमः भूत्वा अग्निगोलकैरिव चंडवचोभिः मां दाहयेत् । किं करोमि ।

शान्ता—समाश्वसिहि । भगिनि, समाश्वसिहि ।

[ आरक्षकः पाणिना गृहीतेन आनंदेन सह प्रविशति ]

नलिनी—(तौ दृष्ट्वा भयाकुला) आनंद ! किं नु कुकर्म त्वया आचरितम् ।

आरक्षकः—(इतस्ततः अवलोक्य) आर्ये, किं दिवाकरपंतः ग्रामान्तरं गतः ।

नलिनी—आम् अद्य प्रत्यागमिष्यति । (सभयं कम्पते)

आरक्षकः—अलं भयेन भगिनि ! अभिजानामि ते पतिराजम् । अतः एव आगच्छं गृहं प्रापयितुम् अमुं वत्सम् ।

नलिनी—अथ किं दुष्कर्म कृतं तेन ।

आरक्षकः—अनेन रूप्यकमुद्राम् आपणिकाय दत्त्वा 'मया द्विरूप्यकमुद्रा दत्ता' इति प्रतिपादितम् ।

नलिनी—( स्वगतम् ) निःशंकम् आर्यपुत्रेण तद्दिने प्रकाशं स्वप्रशंसापूर्वकं कृतस्य दुर्व्यवहारस्य वर्णनं श्रुत्वा स्मृत्वा च तमनुकर्तुं प्रयतितम् वत्सेन । (प्रकाशम् ) ततः ।

आरक्षकः—दिष्टचा तत्र उपस्थितेन केनापि सज्जनेन अस्य सर्वं व्यवहारं निरीक्षमाणेन स प्रत्यादिष्टः संभ्रान्तः सद्यः स्वम् अपराधम् अंगीकृतवान् ।

शान्ता—हा ! जनसंमर्दः तत्र सद्यः मिलितः स्यात् प्रायेण ।

आरक्षकः—आम् । तेन पथा गच्छन् अहं संमर्दम् उपेक्षमाणः हेतुपूर्वकम् आहूतः तेन सज्जनेन वत्सं भाययितुम् ।

नलिनी—हन्त !

शान्ता—ततः ?

आरक्षकः—दिवाकरपन्तम् अभिजानता तेन सज्जनेन कर्णे मह्यं वृत्तं कथितं वत्सस्य अपराधस्य प्रार्थितोऽहं च प्रापयितुम् एनं गृहम् ।

नलिनी—दिष्टचा रक्षिताः वयं भगवता उभौ अपि सज्जनौ संप्रेर्य अपराध-व्यवस्थापने सद्यः ।

आरक्षकः—अननुभवः अपरिपक्वबुद्धिश्च वराकः वत्सः कमपि चित्रपटे दृष्टं श्रुतं कथायां पठितं वा साक्षात्कृतं दुर्व्यवहारम् अनुकर्तुं प्रयतितवान् ।

नलिनी (स्वगतम् ) सत्यं भवता तर्कितम् । (प्रकाशम् ) संभवति तथा । तर्जयामि तं पुनः आचरितुं दुष्कर्म । चल रे !

आरक्षकः—(वापूरावम् उद्दिश्य) तात ! भवतापि यावच्छत्रये वत्सः सुपथे रक्षितुम् अवधेयम् ।

बापूरावः—(भगवन्नाम जपन) पांडुरंग हरे । वासुदेव हरे !

नलिनी—(प्रविश्य) (पंचरूप्यकमुद्रां पुरस्कृत्य) इदं स्वल्पं पारितोषिकम् ।

आरक्षकः—( प्रणम्य स्वनियोगानुसारम् ) अनवश्यम्-अनवश्यम्-कर्तव्यमेव मया कृतम् ।

नलिनी—स्वीक्रियतां कृपया ।

आरक्षकः—(स्वीकुर्वन्) यथेच्छति भगिनी । सम्यग्बोधेन सुपथे रक्षितव्यः वत्सः ।

नलिनी—अवश्यम् ।

आरक्षकः—(प्रणम्य) साधयामि (निष्क्रान्तः) ।

बापूरावः—( स्वगतम् ) पाल्यसंबंधे पित्रोः कर्तव्यच्युतेः इदम् अपरिहार्यं फलम् ।

शेखरः—(स्वगतम्) लोकेषणया भगिनीमंडले उपभोगलालसया च द्रव्यार्जने कालापव्ययं कुर्वत्या पाल्यः उपेक्षितः सः च कुमार्गे प्रवृत्तः इति स्वाभाविकम् ।

शान्ता—भगिनि ! गतं न शोच्यम् । धैर्यम् आश्रीयताम् । साधयामि । (निष्क्रान्ता) ।

नलिनी—( स्वगतम् ) यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः इति सत्यं सुप्रतीतम् अनेन प्रसंगेन विपरीतया घटनया । सद्गुणापेक्षया दुर्गुणाः बलवत् प्रेरयन्ति बालान् अनुकरणाय । स्मरामि, कतिपयदिवस-पूर्वम् पुत्रेण सोल्लासं साभिमानं च निवेदितं वत्सस्य समक्षं कथं तेन ग्राहकसंमर्दे पंचरूप्यकमुद्राम् आपणिकाय दत्त्वा दश रूप्यकमुद्रा दत्ता इति प्रतिपाद्य पंचरूप्यकमुद्रा संपादिताः इति ।

निवेदन—श्रवणावसरे एव मया मनसि निश्चितं यद् रात्रौ रहः प्रार्थयितव्यः आर्यपुत्रः तादृशम् अनुचितं कर्म न पुनः आचरितुं, सोत्साहं च वत्सस्य पुरतः स्वात्मस्तुतिं वर्णयितुम् । परं तस्मिन्नेव दिने

आगन्तुकानाम् आगमनेन रहः संलापः अशक्यतां गतः तदनंतरं च दुर्दैवेन सः विषयः मम स्मृतिपथात् निर्गतः ।

[ पत्रवितरकः पत्रं देहल्यां क्षिप्त्वा निर्गच्छति ]

[ नलिनी तद् उद्धृत्य प्रेक्ष्य कम्पमानकराभ्याम् उद्घाट्य पठन्ती विवर्णा भूत्वा निःश्वसति दीर्घम् । पत्रं पुटीकृत्य आवरणे सारयित्वा मञ्चे निधाय शून्यदृष्ट्या द्वारे प्रेक्षते । ]

शेखरः—भगिनि ! सुधायाः पत्रं किम् । अपि कुशलम् ।

नलिनी—कुशलम् इत्येव तावत् ज्ञातव्यम् । (स्वगतम्) कुशलपत्रं प्रेषितम् इति भद्रम् अभद्रेषु संवृत्तेषु ।

लिखति वत्सा—नहि—कुवत्सा—मयातुल्यरूपगुणान्वितः पतिः वृतः । गुरुवासरे नाम अद्यैव प्रियकरेण सह युष्मान् अभिवादयितुम् आगच्छामि । अहो ! धाष्टर्यम् एतयोः । न बिभीतः गुरुजनकोपात् । को नु स प्रियकरः स्यात् । सः रमणलालः ! विजातीयः ! गूर्जरः । अन्ते लिखति—

शेषं वृत्तं समक्षं ज्ञात्वा तव तातस्य च कोपः विलीयेत । किं नावश्यकता अवशिष्टा वधूनां, मातापित्रोः अनुज्ञायाः वा मन्त्रणस्य वर-निश्चयार्थम् इदानीम् । किं मनःसंयमः अशक्यः विकारसुलभपरिस्थितौ । अथवा नृत्यं, गायनं, नाट्याभिनयः, प्रणयकथापठनं, प्रणय-प्रधान-चित्रदर्शनम्, महाविद्यालयीयं स्वातन्त्र्यं, सहशिक्षणं च इत्येषाम् अयं अवश्यम्भाविपरिपाकः प्रतीयते ।

जगदम्ब ! त्वमेव मे शरणम् । पाहि माम् अस्मिन् कृच्छ्रे ।

शान्ता—(प्रविश्य) भगिनि, निर्गच्छन् पत्रवितरकः दृष्टः मया । अतः सुधायाः पत्रं प्राप्तम् । हा ! नयने बाष्पाकुले दृश्येते । उच्यतां भगिनि !

[ नलिनी सुधायाः पत्रं मंचात् उद्धृत्य पुरस्करोति ]

शान्ताः—(पत्रम् अवलोक्य सनिःश्वासम्) हूं ! बलीयसी । केवलमीश्वरेच्छा । जगदम्बा रक्षतु त्वाम् अस्मिन् प्रसंगे ।

नलिनी—यदि पंडितः उपास्थास्यत अस्मिन् संकटे—न मया मानितः तस्य हितोपदेशः समये । दुर्भगे नलिनि ! शालांत-परीक्षाम् उत्तीर्णायाः

एव सुधायाः विवाहः यत्नतः त्वया न निर्वर्तितः। तत्प्रमादस्य कटु फलं भुंक्ष्व इदानीम्।

शान्ता—अलं शोकेन, भगिनि ! सोढव्याः धैर्येण संसारे उदिता आपदः।

दिवाकरः—(पेटिका-पाणिः प्रविश्य) सत्यम् शांताभगिनि, सत्यमेव। आपत्संकुलः संसारः, अशक्यप्रायं च जीवितुं धैर्यविहीनैः। अद्य तैलरथे (Bus) गहनविपिने एव, मध्येमार्गं सहसा स्तब्धगतिके संवृत्ते, अस्माभिः प्रवासिभिः होरात्रयं कथमपि यापितं क्षुधातृषाक्रांतैः। नलिनि ? शीघ्रातिशीघ्रं चायम् आनय।

नलिनी—को विलम्बः स्यात्। वर्शेन सिद्धः अस्मत्सेवार्थं बद्धपरिकरः। झटिति आनयामि। अन्तर्गृहं गच्छति।

शान्ता (स्वगतम्)—ममापि निष्क्रमणम् उचितं स्यात् (निष्क्रांता)।

दिवाकरः—(शेखरम् अभ्यासमग्नं विलोक्य सहसा अन्तःप्रेरितः निभृतं तत्समीपं गत्वा पृष्ठतश्च पठचमानं पुस्तकं निरीक्ष्य झटिति उद्धृत्य सकोपम्) भ्रातः। किमिदम् ? *रंभा अभ्यासार्थं कदा नियुक्ता (उच्चैः) नलिनि ! पश्य तावत् !

नलिनी (वहिरेत्य)—किं द्रष्टव्यं मया।

दिवाकरः—देवरस्य अभ्यासः न त्वया निरीक्ष्यते किम्। पाठय-पुस्तके रंभां निधाय सः अभ्यासम् अपदिशति। कथं कदा च स परीक्षाम् उत्तरेत् न जाने।

नलिनी—नासौ अल्पवयाः खलु। तेन इदानीं स्वहितं ज्ञातुं शक्यते। आनयामि चायम्। (निष्क्रांता)

दिवाकरः—कुत्र वर्तते वत्सा। (मंचे स्थितं पत्रं प्रेक्ष्य, सकुतूहलं उद्धृत्य च) किमिदम् (साश्चर्यम्) सुधायाः हस्तलिखितमेतत् ! (सकृत् दृष्टिक्षेपेण प्रक्षुब्धः) नलिनि ! नलिनि ! किमिदम्।

नलिनी—(चायं पुरस्करोति) किमापतितम्।

दिवाकरः—(चायपात्रे सक्रोधं प्रक्षिप्य) किमापतितम् इति मामेव पृच्छसि। किं पत्रं न पठितम् इदं त्वया।

---

* श्रृङ्गार-प्रणय-प्रधान मासिकपत्रम्।

नलिनी (साश्रु)—पठितम् ।

दिवाकरः (सविषादम्)—कृष्णायितं मे वक्त्रं दुर्वृत्तया, अयं तव निग्रहाभावस्य परिपाकः !

नलिनी—भवतापि प्रोत्साहिता सा कलोपासनायाम् ।

दिवाकरः—प्रोत्साहिता मया ! कलोपासना एवं शोकाकुलतायां परिणमेत् इति न मया तर्कितम् । मन्ये संशयकल्लोलेन विलोलं कृतं अस्मद्गेह-सौख्यम् । किं न स्मरसि मया कष्टेन अनुमता कन्या नाट्याभिनयाय कन्याजनन्योः युवयोः निर्बंधादेव ।

नलिनी—वंचितास्मि तया ।

दिवाकरः—न स्त्री स्वातन्त्र्यमर्हति इति एवं निर्विवादं प्रतीयते । मदपेक्षया त्वया तारुण्यसुलभस्खलनशीलता निश्चयेन ज्ञातुं शक्या आसीत् । किमर्थं त्वया समये एव संभाव्या आपत्तिः न निवारिता ।

नलिनी—किं भवता नाभिनंदिता कन्या मनःपूर्वकं नाट्यप्रयोग—पारितोषिक-लाभार्थं तदनन्तरं च वृत्तपत्रकृतगौरवार्थम् ।

दिवाकरः—परम् एवं तव कर्तव्यच्युतिप्रमादः प्रमार्ष्टुं न शक्यः । तव लोकैषणार्थं महिलामण्डलव्यवसायः, भोगलालसार्थं च द्रव्यार्जनम् एभ्यामन्त्र अपराद्धम् ।

नलिनी—भवांस्तु निर्दोषः सर्वथा ।

दिवाकरः—अवश्यम् । जानासि कष्टमयं मे जीवनम् । सप्ताहे कदाचन गृहम् अस्तीति विश्रमार्थम् आगच्छामि ।

नलिनी—(स्वगतम्) सर्वेषामपि पुरुषाणाम् इयं रीतिः । किं विवादेन । स्त्रीभिः सर्वदा स्वपराजयः स्वीकर्तव्यः पुरुषाणाम् अग्रतः । (प्रकाशम्) विवादेन न सिध्येत किमपि । स्वीकरोमि मम प्रमादम् । अथ कथं वर्तितव्यम् इदानीम् । भ्रमरः कमलिन्याः मधु आस्वाद्य तां न परित्यजति इति अल्पसांत्वनं नैक-दुःखेषु ।

दिवाकरः—आम् ! भ्रमतीव मे मनः ।

नलिनी—किमिष्यते । उष्णं वा शीतं पेयम् ।

दिवाकरः—शीतपेयम् । [निष्क्रांता नलिनी] ।

शेखरः —(स्वगतम्) संतप्तभुवा शीतवृष्टिरेव अभीष्यते ।

दिवाकरः—

सुखमय इति नृणां नित्यमाभासमानो
भव उरुलघुदुखैः पूर्ण एषोऽस्ति नूनम् ।
नयनसुखदरम्योऽप्यापगौघो बिभर्ति
स्वहृदि भयदगुप्तान् प्रस्तरावर्तनक्रान् ॥

(नलिनी शीतपेयम् आनीय ददाति)

अथ कुत्र वत्सः । विस्मृतः स वराकः व्यसनकल्लोले ।

नलिनी—तेन अद्य नामासदृशं कर्म आचरितम् ।

दिवाकरः—नामासदृशम् ? कथम् तावत् सिद्धोऽहं श्रोतुम् । दुःखं दुःखानुबंधि ।

नलिनी—शाकापणिकं वंचयितुं प्रयतमानः गृहीतः आरक्षकेण, भवान् परिचितः इति गृहं प्रापितः, निग्रहीतुं च उपदिष्टा अहं, भवता सह ।

दिवाकरः—आह्वय तम् । आनन्द ! इतः त्वरस्व । किं नु कारणं वाममार्गावलंबस्य ।

नलिनी—मा खलु । मा आहूयतां स इदानीम् । कर्णे कथयामि कारणम् । (कथयति)

दिवाकरः—ज्ञातम् ज्ञातम् ।

[ एकतः मातुलः, अन्यतश्च सुधारमणौ प्रविशन्ति ] [ दिवाकरस्य पादयोः उभौ प्रणमतः । ]

शेखरः—(स्वगतम) अयि ! वयस्यः रमणः नववध्वा सुधया सह । इदानीं प्रेक्षणीयः खलु संघर्षः भवेत् । जयतु इदं प्रणयियुगलम् ।

दिवाकरः—(सकोपम्) मुंच ! मुंच, सुपथच्युते पदौ,

कोऽधिकार इह नु त्वदागमे ।
भो ! जना ! गुरुजनावधीरणा-
प्रेरकं धिगिदमस्तु शिक्षणम् ॥

सुधा (सानुनयं बद्धाञ्जलिः)—सदय जनकः ! मातः ! क्षम्यतां कन्यकेयं
निपुणमुपकृताहं स्निग्धसंवर्धनेन ॥
स्खलितपथमरण्यात् आगतं सद्म रात्रौ,
न करुणनिधिगौर्निःसारयत्यार्तवत्सम् ॥

दिवाकरः—तर्हि गृहाण मातृपदौ । पितुरधिका माता समादरणीया । मातापितरौ, उमामहेश्वरौ रुक्मिणीविठ्ठलौ इत्येतैः रूढसर्वमान्य-सामासिकशब्दैः ।

[ उभौ नलिनीचरणयोः शिरः नमतः ]

पंडितः—(साश्चर्यं स्वगतम्) किं नु एतत् । कलानिपुणा इयं कुलमर्यादाम् अतीत्य स्वयमेव अभीष्टं वरं वृतवती इति दृश्यते । को नु अयं स्यात् ।

नलिनी (स्वगतम्) चतुरः खलु आर्यपुत्रः । तेन मयि नियुक्तं दुर्नय-व्यवस्थापनकार्यम् । किं करोमि । अत्र आर्यपुत्रमेव प्रमाणीकर्तुमुचितं स्यात् । (प्रकाशम्) नहि ! नहि ! गृहस्वामी एव अत्र प्रमाणम् । अनुनीयतां सः सर्वप्रयत्नैः ।

( उभौ दिवाकर-पादयोः पतित्वा बद्धांजली तिष्ठतः )

सुधा—क्षम्यतां तात ! क्षम्यतां कृपया ।

पंडितः—(साश्चर्यम्) कियेतत् पन्त ?

दिवाकरः—किं न ज्ञायते भवता ?

पंडितः—नहि ! नहि ! सत्यत्वेन । अद्यैव प्रत्यागतोऽहं वाराणस्याः ।

दिवाकरः—तर्हि पठ्यताम् इदं पत्रम् । (ददाति)

पंडितः—(पठित्वा सस्मितम्) ज्ञातम् । सुज्ञकन्यया व्याधिपीडितः भ्रमणवृत्ति-क्लेशितश्च पिता रक्षितः वर-संशोधनस्य भूरिश्रमात् । भगिनि ! त्वमपि तद्विषयकात् महदायासात् ।

( शान्ता प्रविश्य तिष्ठति प्रेक्षमाणा सचिन्तं प्रतिवेशि-संकट-पर्यवसानम् )

दिवाकरः—(साभिप्रायं पंडिते प्रेक्ष्य) इदानीं किं कर्तव्यम् ?

पंडितः—अस्मिन् विषये मर्यादायाम् उल्लंघितायाम् आशीः-प्रदानात् अपरं कर्तव्यम् अस्मत्करे अवशिष्टम् ?

दिवाकरः—अस्मद्-गुरुजनानाम् अधिकारस्य अतिक्रमणस्य कुतः परिहारः ?

सुधा—(बद्धांजलिः साश्रु च) तात ! तात !

यौवनेन मम खल्वपराद्धं
स्मर्यतां हि निजयौवनकालः ।
क्षंतुमर्हत उभावपराधान्
आशिषो वितरितुं बहुलाश्च ॥

दिवाकरः—अथ किं कुलशीलादि वरस्य ?

सुधा—(रमणं प्रति) अथ निवेद्यताम्।

रमणः—(प्रणम्य) कृपया श्रूयतां मधुरं रहस्यं मम जन्मनः संगोपनस्य च। सर्वथा विषादापहं मोदावहं च भवेत् तत् सर्वेषां गुरुजनानाम्।

दिवाकरः—शोभनम्। उच्यतां तावत्।

रमणः—मम बाल्ये सहसा दिवंगतौ पितरौ ग्रन्थिरुजा गुर्जरभूमौ निवसन्तौ। अस्मद्-गृहस्वामिन्याः गुर्जरस्त्रियाः प्रीतिभाजनम् आसं निरपत्यायाः। तया वात्सल्येन संवर्धितोऽहं पश्चात् पित्रोः, यौ महाराष्ट्रीय-ब्राह्मणौ आस्ताम्। मम नाम्ना सह दृश्यमानः गुर्जरीयः आचारः मम पालक-मातुः प्राप्तः स्वाभाविकरीत्या।

दिवाकरः—अपि सत्यम एतत् ?

पंडितः—कः प्रत्ययः एतस्य वृत्तस्य ?

रमण०—पालकमाता प्रत्ययं दास्यति। नेष्यामि वाम् अवश्यं तत्र तस्या आशिषः संपादयितुं नवोढया प्रियया सह समन्वितः।

दिवाकरः—अपि तस्याः अविदितः अयं परिणयः।

रमणः—आम्! परं सा निःशंकं क्षमेत माम् अभिनंदयेच् च सर्वं वृत्तं मत्तः निशम्य।

दिवाकरः—तर्हि वत्से! क्षमार्हास्ते अपराधाः। पंडितराव, किम् अभिप्रैति भवान्।

पंडितः—उचितः खलु भवतः क्षमानिर्णयः।

दिवाकरः—(पत्नीम् उद्दिश्य) किं त्वम् अनुमन्यसे अपराधक्षमां वत्सायाः कृते।

नलिनी—अवश्यम्।

दिवाकरः—(सुधारमणौ उद्दिश्य) तर्हि अभिवादयतं तात-चरणौ प्रथमम्।

( वधूवरौ वापूरावचरणौ प्रणमतः )

वापूरावः—(स्वगतम्) मुहंमदीयः स्त्रैस्तः वा हरिजनः अनया न वृतः इति भगवत्-कृपा एव। अन्यथा असह्यः अभविष्यत् सः आघातः अस्मिन् कुटुंबे विशेषेण मादृशस्य क्षीणबलस्य जीर्णमतवादिनश्च हृदये। (प्रकाशम्) कल्याणम् अस्तु। शुभं भवतु युवयोः।

दिवाकरः—ततः प्रणम्यतां मातुलः । सुदैवेन सः समये एव प्राप्तः निमंत्रित इव ।

( पंडितं प्रणमतः वधूवरौ )

पंडितः—कल्याणम् अस्तु उभयोः ।

दिवाकरः—ततः शांताभगिनीं प्रणमतम् ।

शान्ता—नहि पित्रोः आशिषः लब्धव्याः आदौ । पश्चात् मत्तः ।

उभौ—(नलिनी-दिवाकरौ प्रणम्य) कृपया दीयन्ताम् आशिषः ।

नलिनी-दिवाकरौ—कल्याणम् अस्तु । चिरं जीवतम् ।

शान्ता—(उभयोः प्रणामं स्वीकृत्य) वत्से ! सौभाग्यवती पुत्रवती च भव ।

पंडितः—यद्यपि, शांताभगिनि ! भवत्याः आशिषः उत्तरार्धः अद्यतनकालस्य अननुरूपः, योग्यः एव यथाकालम् इति अध्याहृतपदस्वीकारेण ।

शेखरः—वयस्य रमण ! अभिनंदनम् ।

( हस्तान्दोलनं करोति तेन सह )

नलिनी—भ्रातः ! वरः परिचितः भवतः इति दृश्यते । किमर्थं न कथितं मे तथा ।

शेखरः—भवत्या न पृष्टोऽहम् ।

नापृष्टः कस्यचित् ब्रूयात् ।

नलिनी—चतुरोऽस्ति खलु भवान् मित्रकार्यसाधकः । (आनंदः प्रविशति)

दिवाकरः—एहि वत्स ! क्षान्तस्ते अपराधः अस्मिन् मंगलसमये । सद्वृत्तः भव इतः परम् । तात ! किमिदानीं प्रार्थयितव्यं भगवतः ?

बापूरावः—किमपरम् ? श्रूयताम्—

राष्ट्रे सर्वे युवतियुवकाः सन्ति शक्तिस्ततस्ते
मात्रा पित्राऽनलसमनसा शासनेनाऽपि यत्नैः
विद्याशीलद्युति-बलयुता बाल्यतो वर्धनीयाः ।
कर्तव्ये तान् सदय ! भगवन् प्रेरयाशु स्वकीये ।।

सर्वे—तथास्तु ।

इति तृतीयोऽङ्कः ।

इति शिक्षणं-नाम-नाटकम् ।।

---

# नियमाः

१. विश्वसंस्कृतं त्रैमासिकं पत्रम् । (तत् फर्वरी-मई-अगस्त-नवम्बर-मासानां) प्रत्येकं १५ दिनाङ्के प्रकाशितं भविष्यति ।

२. अस्मिन् प्रकाशनार्थम् एतदीयध्येयाऽनुकूलाः सत्यः मनोहारि-पद-योगा विचार-निर्भराः शिष्ट-जनोपयोगाऽर्हाः सर्वविधा रचनाः शोध-पूर्णा आलोचनात्मका वा यात्राद्युपवर्णनात्मका वा निबन्धाः, कविताः, रूपकाणि, कथाः, हास्य-कृतयः स्वीकृताः स्युः ।

३. प्रकाशनाय प्रेष्यमाणाः कृतयो नाऽतिदीर्घाः सत्यः सुवाच्याऽक्षरैः पत्रस्यैकतो लिखिता वोटङ्किता वा स्युः ।

४. रचनानां प्राप्ति-सूचना प्राप्ति-समकालम् एव प्रहीयते । तासां प्रकाशनं तु यथावसरं परीक्ष्य पश्चाद् एव संभवेत् । अतो लेखक-महोदयाः प्रस्तोष्यमाण एवाऽङ्के स्वकृतीनां प्रकाशनाय साऽऽग्रहा न भवेयुः ।

५. अप्रकाशितायाः सत्याः स्व-कृतेः परावर्तनम् इच्छन्तः सज्जना यथापेक्षं पत्रालयीय-मुद्रिकाः प्रेषयेयुः ।

६. लेखकाः स्वनाम-धाम-निर्देशादिकं सुवाच्याक्षरैर् लिखेयुः । सति संभवे पत्रालयादि-संकेत आंग्लभाषायाम् अपि लेख्य. .

७. पत्रस्य वार्षिकं शुल्कं भारते ८ रूप्यकाणि, विदेशेषु १२ शिलिङ्गानि च वर्तते । तच् च पूर्णम् एव पूर्वतः प्रदेयं भवति । वी. पी. द्वारा प्रेषणस्य न नियमः ।

८. वि. वै. शो. संस्थानस्य सदस्यानां कृते वार्षिकं शुल्कं रु. ६) अस्ति । एषा सदस्यता द्वि-प्रकारा भवति, जीवन-सदस्यतेति च वार्षिकसदस्यतेति च । पूर्वस्याः सकृद्-देयं शुल्कं रु. ५००) । उत्तरस्याः प्रतिवर्षं देयं शुल्कं रु. १५) । सर्वेभ्योऽपि सदस्येभ्यः संस्थानस्य द्वादश-रूप्यक-शुल्का विश्व-ज्योतिराख्या मासिकी हिन्दी-पत्रिका निःशुल्कं षाण्मासिकी 'विश्वेश्वरानन्द-इण्डोलोजिकल जर्नल' इत्याख्याऽऽङ्गली पत्रिका चाऽपरा २०) रूप्यक शुल्का सती १५) रूप्यकाणि प्राप्य प्रदीयते ।

९. समालोच्य-पुस्तकानां प्रत्येकं द्वितयी प्रेषणीया ।

१०. विज्ञापन-शुल्कम्—पूर्णं पृष्ठम् (एकवारम्) ५०), (चतुर्वारम्) १७५) । पृष्ठस्य अर्धम् ३०), पृष्ठस्य तुरीयम् १६) ।

११. पत्र-व्यवहारे स्वकीया ग्राहक-संख्या सदस्य-संख्या वाऽवश्यम् उल्लेख्या ।

१२. ग्राहकाः पत्र-व्यवहारार्थम् आत्मनः स्थायि-स्थान-निर्देशं यथा-संभवम् आंग्लभाषायाम् अपि लिखेयुः । अस्थायि-स्थान-संकेतस् तु स्व-पत्रालय एव सूचनीयः ।